इत्युच्चारयन् सूरियन्त्रमात्मानं च परितो वासक्षेपं त्रि कृत्वा भूमिशुद्धिं कुर्यात् ॥१॥
"ॐ अमृते अमृतोद्भवे अमृतवर्षिणि अमृतवाहिनि अमृतं श्रावय श्रावय हुं फट् स्वाहा" इत्यु
च्चारयन् आत्मनोऽभिमुखा वामहस्तकनिष्ठिकया संगृह्याथ करौ परावर्त्यते इति गरुडमुद्रया
स्वन्त परितस्त्रि कुण्डकल्पनाम् ॥२॥
"ॐ अमले विमले सर्वतीर्थजलेप प पा पा वा वा अशुचि शुचिर्भवामि स्वाहा" इत्युच्चार
यन् वासाञ्जलौ प्रक्षिप्य सर्वतीर्थाम्भासि तत्र परिकल्प्य सर्वाङ्गस्पर्शेन त्रि स्नानम् ॥३॥
"ॐ विद्युत्स्फुलिङ्गे महाविद्ये सर्वकल्मष दह दह स्वाहा" इत्युच्चारयन् स्वस्तिकाकारीकृतोभय-
बाहुरभयपाणिभ्यां भुजमध्यस्पर्शेन कल्मषदहनम् ॥४॥
"ॐ विमलाय विमलचित्ताय झ्वीं क्ष्वीं स्वाहा" इति दक्षिणकरस्पर्शेन त्रिर्वक्ष शुद्धिम् ॥५॥
तत "क्षिपी त पदो पश्चेत नाभौ । ॐ रक्तं हृदि । स्वानीलं मुखे । हा श्यामं भाले" इति
पृथिव्यादिपञ्चभूतै क्रमोत्क्रमाभ्यां करस्पर्शेन त्रि सकलीकरणम् ॥६॥

"ॐ भाले कु वामासे र वामजानुसंधौ । कु वामाङ्घ्रौल्ले(रु) दक्षिणाङ्घ्रौ स्वा । वामजानुसंधौ
हा' । वामासे क्रमोत्क्रमाभ्यां वामकरस्पर्शेनात्मरक्षाम् ॥७॥
तेनैवाङ्गुष्ठपृष्ठे "ॐ" अङ्गुष्ठतले "ह्रां" । तर्जन्यां "ह्रीं" । मध्यमायां "ह्रूं" । सावित्र्यां
ह्रैं' । कनिष्ठायां "ह्र" । तत करद्वयेऽङ्गुष्ठादिष्वर्हदादिन्यासम् ॥८॥
"ॐ ह्रीं इन्द्राय स्वाहा' इत्यादि भणन् दशदिक्षु वासक्षेप कुर्यात् ९ ।

तत श्रीगौतमस्य पीठ चैत्यवृक्षच्छायास्थित सपादपीठं सिंहासनं छत्रं चामरे विचिन्त्य
वासाञ्जलौ क्षिप्त्वा "आ क्रौं ह्रीं श्रीं भगवन् ! श्रीगौतम ! सर्वलब्धिसंपन्न ! अत्र सहस्र
पत्रवनकमले एह्येहि संवौषट्" इत्युच्चार्य हृत्कमलात् स्फुरद्रश्मिमण्डल द्वादशान्त नीत्वा
तन्मयी भूय ब्रह्मस्थानेऽभ्युदित श्रीगौतम ध्यात्वा तस्मादादायावाहनमुद्रया स्थिरधीराऽऽह्वयेत् ।
सा च सावित्रीमूलन्यस्ताङ्गुष्ठा सवासाञ्जलिमुद्रा १ । "आ क्रौं ह्रीं श्रीं भगवन् ! गौतम !
सर्वलब्धिसपन्न ! अत्र कनककमले तिष्ठ तिष्ठ ठ ठ " इत्युच्चार्य सैव मुद्राऽधोमुखीति
स्थापनमुद्रया पीठस्थसिंहासनोपरि कमले स्थापयेत् ॥२॥
"आ क्रौं ह्रीं श्रीं भग० [० वन् ! श्रीगौतम ! सर्वलब्धिसंपन्न !] मम सन्निहितो भव वषट्"
इत्युच्चारयन् ऊर्ध्वाङ्गुष्ठे मुष्टी मील्येते इति सन्निधापनीमुद्रया सन्निधापयेत् ॥३॥
"आ क्रौं० [० ह्रीं श्रीं] भग० [०वन् श्रीगौतम ! सर्वलब्धिसपन्न !] पूजा यावदत्रैव स्थेयम्"
इत्युच्चारयन् अभ्यन्तराङ्गुष्ठे मुष्टी मील्येते इति सन्निरोधिन्या निरुन्ध्यात् ॥४॥
"आ क्रौं० [० ह्रीं श्रीं] भग० [०वन् ! श्रीगौतम ! सर्वलब्धिसंपन्न !] परेषामदृश्यो भव"
इत्युच्चारयन प्रसारिततर्जनीके मध्यमोपरि निवेशिताङ्गुष्ठे मुष्टी इत्यवगुण्ठिन्याऽवगुण्ठयेत ॥५॥
तत "अ आ, इ ई, उ ऊ, ए ऐ पूर्वादि दिक्चतुष्के, ओ औ ऊर्ध्वदिशि, अं अः अधोदिशि

नखच्छोटिका विघ्नत्रासाय देयाः ॥६॥

गौतमं परितोऽधोमुख्या सुधां वर्षन्त्या कामधेनुमुद्रया प्रदक्षिणात्रिकेण सजीवतापादनायामृतीकरणम् ॥७॥

"आं क्रों० [ह्रीं श्रीं] भग० [०वन् ! श्री गौतम ! सर्वलब्धिसंपन्न !] सुगन्धिपत्रगन्धादीन् गृहाण गृहाण नमः" इत्युच्चारयन् गौतमोपरि अञ्जलिना बुद्धिकल्पितगन्धादिपूजा ॥८॥

ततः स्वर्णाम्भोजस्थं श्रीगौतमः(मं) प्रातिहार्योपेतं चतुर्विधः श्रीसंघः सदेवीका इन्द्रादयश्च नमन्तीति चिन्तयित्वा "आं क्रों ह्रीं श्रीं सर्वेऽपि श्रीसूरिमन्त्राधिष्ठायका अत्र आगच्छन्तु आगच्छन्तु संवौषट्" ।

अत्र तेषां स्वरूपध्यानम्, तद्यथा—

पूर्वस्यां विद्यापीठप्रतिष्ठिता सरस्वती । दक्षिणस्यां मानुषोत्तरपर्वतनिवासिनी सहस्रभुजा त्रिभुवनस्वामिनी । पश्चिमायां पद्महृदान्तःपद्मोपविष्टा चतुर्भुजा विजया–जया–जयन्ती–नन्दा–भद्राऽन्विता स्वर्णाभरणभूषिता पुरःश्रेणीस्थनवनिधाना श्रीदेवता । उत्तरस्यां षोडशसहस्रयक्षपतिर्विंशतिभुजो गणिपिटकयक्षराजः । पूर्वादि ४ दिक्षु ६४ इन्द्राः । पूर्वादि ४ दिक्षु १६ विद्यादेव्यः । एवं २४ यक्षाः, २४ यक्षिण्यः, आवाहनमुद्रया पूर्ववत् । हृत्पद्मादाहूवयेत् । ततोऽत्रापि "आं क्रों ०[ह्रीं श्रीं] सर्वेऽपि श्रीसूरि० [०मन्त्राधिष्ठायका अत्र आगच्छन्तु आगच्छन्तु संवौषट्]" इत्यादि भणनपूर्वं स्थापन्यादिमुद्राभिस्तेषां प्रागेव स्थापनादि । नखच्छोटिकाः । अमृतीकरणम् । गन्धादिपूजा । ततः "संवत् अमुकवर्षे अमुकमासे तिथि–वारेऽहममुकसूरिशिष्योऽमुकसिद्ध्येऽमुकजापमारभे" इति ध्यात्वा "नमः सद्गुरुभ्यः" इत्युक्त्वा चन्द्रेण राजसरूपं रक्तवायुं सूर्येण द्वेषरूपं कृष्णवायुं रेचयित्वा पुनः शशिना सत्त्वगुणरूपं श्वेतवायुमाकृष्य नाभौ च संस्थाप्य प्रसन्नास्यः सुश्लिष्टोष्ठयुगो दन्तैर्दन्तानस्पृशन् नासायां गौतममूर्तौ वा न्यस्तदृष्टिर्जिह्वामप्यचालयन्नन्तर्जल्पाकारमनाहतनादरूपं वा स्मरणमारभेत । तच्चैवम्—सर्वत्र लब्धिपदानि पीठानि च ज्ञानधनार्थे श्रीपूर्वाणि, वश्याद्यर्थे ह्रीं पूर्वाणि, शान्तकादौ ॐ पूर्वाणि, कर्मक्षयार्थं परमेष्ठिमुद्रया निर्मुद्रं वा ॐ ह्रीं श्रीं-रहितानि केवलान्येव स्मरेत् ।

द्विवारं स्नानं सुगन्धिविलेपनम् । त्रिधा शुद्धं शीलम् । प्रतिक्रान्ति प्रतिलेखनां चैत्यवन्दनां च विनाऽन्यद्व्याख्या–पठन–पाठनादि त्याज्यम् । सर्वविकृतीर्मुक्त्वा लक्षमानः करजापः कार्यः । जापभेदाः पुनरग्रे वक्ष्यन्ते ।

एषा पूर्वसेवोच्यते ।

अस्यां च कृतायां निष्पापः सातिशयश्च स्यात् । लक्षजापान्तर्यथाशक्तिस्मरणां कृत्वोत्तिष्ठासुर्विसर्जनं कुर्यात्, यथा– दक्षिणकरेण मुष्टिं बद्ध्वा तर्जनी–मध्यमे प्रसार्य इत्यस्त्रमुद्रया

गौतमस्यासन मनाक् चालयित्वा,

ॐ आज्ञाहीन क्रियाहीन मन्त्रहीन च यत् कृतम् ।
तत् सर्व कृपया देव ! क्षमस्व परमेश्वर ! ॥१॥

इति पठित्वा "ॐ ह्रीं नमोऽस्तु ते भगवन् ! पुनरागमनाय स्वस्थान गच्छ गच्छ"। य इति भणन् दक्षिणकर प्रसार्य हेमाम्भोजस्थगौतमस्योपरि संहारेण भ्रमयित्वा कनिष्ठादि सर्वाङ्गुलीना संकोचतो(ने) नाङ्गुष्ठमूलानयनमिति विसर्जनमुद्रया विसृज्य श्रीगौतम ब्रह्म रन्ध्रं नीत्वा सुपुम्नया हृत्पद्मे पूरकेण स्थापयेत्। यतस्तस्मादाहूय स्थापितोऽभूत्। ततोऽस्त्र मुद्रया क्षोभण कृत्वा,

ॐ आज्ञाहीन०[०क्रियाहीन० मन्त्रहीन च यत् कृतम्] ।
तत् सर्व कृपया देव ! क्षमस्व परमेश्वर ! ॥

इत्युच्चार्य "ॐ ह्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायका पुनरागमनाय स्वस्थान गच्छन्तु गच्छन्तु" य इति पठन् विसर्जनमुद्रया सूरिमन्त्राधिष्ठायकान् प्रागिव ब्रह्मद्वारेण हृत्पद्मे वहिर्वद् गौतम परित सरस्वत्यादीन् न्यसेत्। तत "पढमसप्प सुनिविट्ठा" इति स्तुतिपाठ । ततोऽशनादि कार्याणि कृत्वा पुन स्मरणाप्रारम्भे पूर्ववद् भूशुद्ध्यादिविसर्जने च क्षोभणादि कुर्यात्।

अथोत्तरसेवोच्यते—

तत्राद्यपीठ विद्यापीठ नाम । तत्र गच्छेशमन्त्रपटेऽष्टादशलब्धिपदादि पसिज्झउ-स्वाहा न्त पञ्चनवत्यधिकशताक्षरमात्रम्(१९५) सामान्यसूरिमन्त्रपटे तु षोडशलब्धिपदादि-पसिज्झउ स्वाहान्त चतु सप्तत्यधिकशताक्षरमात्रम् (१७४)। अस्याधिष्ठात्री सरस्वती, तस्या पूजा स्तुती कुर्यात् ।

आराधना तपाविधिस्त्वयम्—

उ नि आ नि आ नि आ नि उ इगपणिगपणेगपणिगइगमेग ।
चिंतण पढण विकहाचाओऽहोरत्तणु ठाण ॥१॥

ओ (न) ८ नि ५ आ १ नि ५ आ १ नि ५ आ १ नि १ उ १-एवं दिन २१ कोटचशतप । अनेन तपसा महाफलम्, अन्यथाऽल्पफलम् । पद्मासनस्थ पूर्वामुख उत्तरामुखो वा परमेष्ठि मुद्रया गरुडमुद्रया वा सहस्रद्वादशक जपेत्। श्वेतध्यानेन सामान्यत सर्वसिद्धिकरम्। उक्त च—

एकविंशत्यहान्यर्कसहस्र १२ प्रमितो जप ।
कोट्यशतपसा शान्तिलाभ वाग बुद्धिसिद्धये ॥१॥

परमेष्ठि-गरुडमुद्रायुगेन जापोऽस्य देवतेन्दुनिभा ।
पुस्तकमभयं मुक्तास्रजं वरं तन्वती भुजचतुष्के ॥२॥
हंसेऽम्बुजे निविष्टा वाग्बीजेऽथान्तरात्महंसे वा ।
भ्राजीव पुण्डरीकं सरस्वती गोतमं नमति ॥३॥
गोतमनन्ता(न्त्या ?) देव्या पुत्रदृशा वीक्षितः प्रदत्तवरः ।
पञ्चमहाव्रतनिष्ठो युगप्रधानागमो भवति ॥४॥

तथा श्रीगच्छेशा अप्येवमेव पूर्वं सामान्य श्रीसूरिमन्त्रं साधयित्वैकविंशति(२१)वर्णमात्र स्वाहान्तं लब्धिपदद्वयं १२ सहस्राणि जपेत् । अक्षीणकोशत्वं सर्वत्राप्रहतयशस्त्वं च स्यात् । तथा क्षीराश्रवादि लब्धिपदानि षट्, सहस्राणि दश(१०) श्वेतध्यानेन जप्यन्ते श्वेतजपमालया पष्ठलब्धिपदान्ते च,

"जमियं सारस्सयं पउंजामि तं मे सारस्सयं पसिज्झउ स्वाहा" इति वाच्यं सिद्ध-सारस्वतम् । प्रथमपीठे १२ सहस्रजापादनु होमः कार्यः । तद्विधिश्चायम्—
हस्तमात्रं चतुरस्रं कुण्डं भौमं हसन्तीमयं वा कृत्वाऽरणेर्वा भानुकान्ताद् वा तत्राग्निं प्रज्वाल्य मन्त्रेण प्रतिष्ठापयेत् । स चासौ "मनोर्जूतिर्जुषतास्य ह्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञगिं समिमं दधातु विश्वे देवाः स इह मा दयन्तामों (स ओं) प्रतिष्ठ" । वार ७ भणित्वाऽक्षता ज्वालाकरालेऽग्नौ क्षेप्याः । अग्नेश्च सप्तजिह्वाः स्मरेत् । तास्वीशान-जिह्वायां मध्यजिह्वायां वा जुहुयात् । सप्तघृताहुतयो विद्यापीठोच्चारणेन अथवा दशांशेन होमः । सचैवम्—

गरुडाख्यतण्डुलघृतैकवर्णश्वेतगोपयःखण्डमयीः १२ शतमाना गुटिकाः कृत्वा विद्यापीठोच्चारपूर्वं जुहुयात् । पश्चात् केषाञ्चित् फलदुकूलादीष्टवस्तूनां त्रिश्चिः कत्यपि होमाः । ततः पूर्णाहुत्यर्थं घृतभृतनालिकेरस्य । तदा चेदं वाच्यम्—

"इमां पूर्णाहुतिं भगवति ! सरस्वति ! प्रतीच्छ मम कामितं कुरु कुरु स्वाहा" । यावन्नालिकेरं सर्वं तावत् प्रतीक्ष्यम् । अग्निं च महाघृतप्लवेन दीपयेत्, 'घृतहीनं दहेद् राष्ट्रम्' इति वचनात् । तद् भस्म संगृह्य स्वयं धार्यमिष्टेभ्यो वाऽल्पं देयम्, शान्ति-तुष्टिपुष्टिहेतु । अनयैव रीत्या महाविद्योपविद्यापीठयोरपि होमः । नवरमाहुति-होमौ स्व-स्वा-धिष्ठायिकादेवतानामादाय स्व-स्व-मन्त्रेणैव । एवं च तपो-जाप-होमैराराधिते प्रथमपीठे सूरिः सरस्वती १, रोगापहारिणी २, विषापहारिणी ३, बन्धमोक्षिणी ४, श्रीसंपादिनी ५, परविद्याच्छेदिनी ६, दोषनाशिनी ७, अशिवोपशमनी ८ । एता अष्टमहासिद्धीः स्वस्य परस्यापि साधयति । कोऽर्थो यदा स्वस्यान्यस्य वा सारस्वतमुत्पादयितुं रोग-विषं हन्तुं

बन्धं छेत्तुं श्रियं कर्तुं कार्मणादि हन्तुं दोषं नाशयितुं मारिं शमयितुमीहते तदा प्रथमपीठं स्मरेत्। स्वल्पस्मरणेनापि सिद्धयति। श्रीमानतुङ्गसूरिभिराभिरेवाष्टविद्याभिर्गर्भितं 'यैः शान्तरागं' इत्यादि 'जलभारनम्रैः' इत्यन्तं काव्याष्टकं कृतम्। एतच्च काव्याष्टकं 'ज्ञानं यथा त्वयि' इति नवमकाव्ययुतं प्रातः प्रत्यहं यः पठेत् स सारस्वतादीरष्टसिद्धीराप्नोति परं च प्रापयति।

इत्याद्यपीठसाधनाविधि ॥

द्वितीयपीठे—ॐ नमो भगवओ इत्यादि विज्जा यावत्, अक्षर ३३ एषा बाहुबलीविद्या स्वप्नाद्यर्थम्। ततो वग्गु वग्गु इत्यादि महुमहुरे यावद् वर्णा २२ सौभाग्यविद्या। ततो हिलि हिलि इत्यादि आयरियकालि यावद् वर्णा ३० जयादि विद्या। एवं सर्वाक्षर ९३। अस्य पीठस्याधिष्ठात्री मानुषोत्तरशिखरवासिनी सहस्रभुजा त्रिभुवनस्वामिनी।

आराधना-तपोविधिश्चायम्—

उ नि आ नि आ नि उ इगेगतिचउदुगदुइगपुव्वन्नावारो ।
सविसेसो जिणयव चत्त-मतडसय चउस्सग्गे ॥

एवं दिन १४ सुरयकल्पेषु तु उपवासो १, रूक्षान्नम १, आचाम्लत्रितय(३)मपरसचतुष्कम्(४)।(१) आचाम्लमपरसयुगम्(२), उपवासस्त्वधिकदश १३ दिवसा इत्यस्ति उभयमपि प्रमाणम्। जिणथवचत्तत्ति-लोगस(स्स) ४० चिन्त्या कायोत्सर्गे मन्त्राष्टोत्तरशतं च नित्यं चिन्त्यमुत्सर्गे। एवं तपः कुर्वन् प्रथमं बाहुबलीविद्या श्वेतध्यानेन सहस्र १० स्मरत। होमः प्रथमपीठवदत्रापि। उत्पन्नेन कार्ये ऐर्यापथिकीं प्रतिक्रम्य रजोहरणमुखवस्त्रिके पुरो मुक्त्वा कायोत्सर्गेऽष्टोत्तरशतं स्मरेत्। शुभे बाहू ऊर्ध्वमुत्क्षिप्यतः, अशुभे त्वधः पश्चान्मुखं वलित्वामिथो मिलतः। वादादावस्या १०८ जापेऽपराजितत्वं प्रत्यनीकोपशान्तिः। अस्या च जप्यमानाया शकुनोपश्रुत्यादि सत्यमेव स्यात्। अत्र मन्त्रविशेषो लिख्यते—

"ॐ ह्रीं बाहुबलि-महाबाहुबलिपदातु गिरिमहागिरिति ।
वीरादिवाहुबलये स्वाहा"[1] मन्त्रं सिवनिपट्टे ॥१॥
आलिख्य सुगन्धिदलैः सूर्यसहस्रैस्तु जातिकुसुमानाम् ।
जपः प्रश्ने दक्षिणबाहुस्फुरणे शुभं प्रष्टुः ॥२॥
आलिख्य पादुके द्वे परतो वदने सचन्द्रचन्दनत ।
सलट्टे बाहुबले सितपत्रसुमैः समभ्यर्च्य ॥३॥

---

१ ॐ ह्रीं बाहुबलिमहाबाहुबलिगिरिमहागिरिवीरबाहुबलये स्वाहा ॥

उत्सर्गे पञ्चशतीं "नुँ किरि किरि लम्बवाहुमत्र नमः" ।
जप्त्वा शीर्षे कृत्वा शयने च शुभाशुभादेशः ॥४॥

वाहुवलीविद्यासिद्धेरनु वाग्वादिसौभाग्यविद्यां पीतध्यानेन सौभाग्यमुद्रया षोडश (१६)सहस्राणि-[१६०००] जपेत्। जपमालाऽपि हैमी कृमिजादिमयी वा पीता, होमोऽग्रेतन एव। एकत्रापि कृतेन होमेन विद्याद्वयसिद्धिः। अनया कृपणोऽपि दाता राजकुलादौ सर्वत्रादेयवचनता च तदनु हिलि हिलि इत्यादि जयादिविद्यां पीतध्यानेन गरुडमुद्रया १२ सहस्राणि जपेत्। होमोऽग्रेतन एव। अनया जयविजया जितत्वापराजितत्वानि स्युः। जयः स्वदेशे विजयः परदेशे। अजितत्वमरिपु अपराजित्वं परवादिषु विद्यात्रिकेण॥ [इति] द्वितीयं पीठम्॥ २ तृतीयपीठे-इरियाए इत्यादि कालि-महाकालि यावदक्षर-३५। एतदधिष्ठात्री च पउमदहपउमनिलया इत्यादि गाथोक्तरूपाः विजया-जया-जयन्ती-नन्दा-भद्रान्विता श्रीदेवी। तपोविधिरेयम्—

उ नि आ नि आ नि उ इगट्ठपंचसत्तेगदुइग तइयपए।
उ१ नि८ आ५ नि७ आ१ नि२ उ१—एवं दिन २५।

अत्रापि लोगस(स्स) ४० कायोत्सर्गे १०८ मन्त्रश्च चिन्त्यः प्रत्यहम्। एवं प्रोक्ते तपः कुर्वन् सितध्यानेन सहस्राणि १२ जपेत्। सम्राडपि वश्यः, तथासंदिग्धार्थनिर्श्रेष्टस्वप्नविषये उपोष्य सितध्यानेन षोडशसहस्रजापे सारस्वतमव्यभिचारि तथा नित्यं १०८ स्मरणेन शिष्यलब्धिः। शापोऽनुग्रहशक्तिरादेयगीस्ता पूर्वगुरुसिद्धेरल्पबहुत्वेनाच्छिन्नता च। तथैतज्जपिताऽक्षतानां शीर्षे गृहे च क्षेपे ऋद्धिः स्यादतः श्रावकाणां शिष्याणां च मौलौ वासक्षेपोऽनेनैव कार्यः विशेषतो योगारम्भे।

[इति] तृतीयपीठम्॥ ३

चतुर्थपीठे—इरि इरि कालि इत्यादि आयरिय आयरियकालि यावदक्षर ४६॥

अस्याधिष्ठाता—

अणपणपन्निपइट्ठो वीसभुओ मंतपीढहिट्ठाया।
सोलसहं सहस्स जक्खाण सामिओ जयइ गणिपिडगो॥

तपोविधिरेयम्—

उ नि आ उ इगपणेगिगतुरिए पुव्वो विही समग्गो वि।
उ१ नि५ आ१ उ१ एवं दिन ८।

अत्र परमेष्ठिमुद्रया जाप सितध्यानेन सहस्रद्वादश (१२)–[१२०००]। होमो नास्ति।

"नाधिष्ठायको मन्त्रो न होमस्तत्र यत्र तु।
अधिष्ठात्री भवेन्नारी सा विद्या होमसंयुता॥"

इति वचनात्।

अनेनैवैनैव पूर्वपीठचतुष्कोक्तं सर्वं सिद्ध्यति। [1]मन्त्रपीठं हि भगवतामेकोनत्रिंशदतिशयप्रातिहार्याष्टकरूपम्। अत्र देवाना देवेन्द्राणां न्यासः। यथा इरि इरीति किरि किरीति कल्पेन्द्राणाम्, गिरि गिरीति भवनपतीन्द्राणाम्, पिरि पिरीति व्यन्तरेन्द्राणाम्, सिरि सिरीति ज्योतिषेन्द्राणाम्, हिरि हिरीत्यमलस्वामिगणिपिटकप्रमुखसामानिकानाम्, आयरिय आयरियेति लौकान्तिकानाम्। काल सातिशयक्रियानिष्पादनलक्षणः। सोऽस्मीत्येषा [2]तीर्थकृता पञ्चकल्याणकैकोनत्रिंशदतिशयप्रातिहार्याष्टकोपासना। स्वर्णवृष्टि, समवसरणरचना, गणधराणामभिषेक। अप्रतिहतशासनताऽविलम्बेन तीर्थप्रवृत्तिरविच्छिन्नपरम्पराचारपालकत्वं संपभीसंपादकता-धर्ममर्यादा-मिथ्यात्वानभिभूतत्वं गुरुत्वप्राप्तिर्भक्तोपधिलाभो दुष्टराज-दैवतोपसर्गस्तम्भन वादिनिराकृतिर्दुर्भिक्षकान्तारोल्लङ्घनं सिद्धान्तार्थज्ञानं शापानुग्राहशक्तिर्मुक्तपोनिर्वाहस्तीर्थभुतशिष्यस्थापना एता सातिशयक्रियास्तेषाम्[3]॥

[इति] चतुर्थपीठम्॥

पञ्चमपीठे—इरि मेरु इत्यादि स्वाहान्ताक्षर ३२। अधिष्ठातारश्चतुःषष्टि (६४) इन्द्रा। षोडश विद्यादेव्य(१६)। २४ यक्षा। २४ शासनदेव्य।

तपोविधिरेयम्—

मोणेण सुरहिदव्व च्चिय गोयमतप्परेण य तिसंझ।
झाण इत्थिअद्दसणमतपए सोलसायामा (१६)॥१॥

आचाम्लनिरन्तरम्। अस्य लक्षजापाद् गौतमतुल्य स्यात्। लक्षत्रयजापात् तृतीयभवे सिद्धयति। अथ मन्त्रराज पूर्वोक्तानां पीठानां स्वामी, मेरुशब्देन आर्हन्त्यम। अतोऽनन्तज्ञान–दर्शन–वीर्यानन्दसिद्धिर्ध्यातुर्नित्यस्मरणेन स्यात्। मन्त्रराज्यस्य मोक्षरूपत्वात्। नित्यं कर्मक्षयार्थं १०८ स्मरणारिपुक्षयार्थं च मासमेकं कृष्णध्यानेन कृष्णपुष्पैर्जापस्ततश्चक्रमुद्रया कृष्णध्यानेन मास सदा १०८ ध्येय। महानैष्ठिकस्य मन्त्रराजसिद्धौ मन्त्रसहस्र विद्यासहस्र च

१ मन्त्रपीठं चतुर्थपीठमेव। २ यथा तीर्थकृता कल्याणक५–अतिशय१९–प्रातिहार्य(र्या) ८— अमीषा उपासनेति सेवना। तीर्थकरा एतान् सेवन्ते इत्यर्थ॥ ३ यदुक्त काल सातिशयक्रियानिष्पादन लक्षण तद्वतो सातिशयक्रिया उक्ता॥

प्रसङ्गेन सिद्ध्यति । तथा कुङ्कुम-चन्दन-कस्तूरीभिः कांस्यपात्रे मन्त्रराजं विलिख्य दिन २१ पूजयेत् । प्रत्यहं १०८ जापश्च क्षुद्रदैवतकृतरोगोपद्रवनिवृत्तिः, सर्ववाञ्छितफलावाप्तिश्च ॥

[इति] पञ्चमपीठम् ॥

इह च प्रथमादिपीठेषु स्मर्यमाणेषु क्रमाद् मतिश्रुताऽवधि-मनःपर्याय-केवलज्ञानान्युन्मीलन्तीति वृद्धाः । तथा [1]पञ्चप्रस्थानमयोऽप्येष श्रीसूरिमन्त्रः कर्मक्षयार्थं परमेष्ठिमुद्रया शुक्लध्यानेन, सौभाग्यार्थं योनिमुद्रया रक्तध्यानेन, वश्यार्थं सौभाग्यमुद्रयोत्तप्तहेमध्यानेन । रिपुक्षयार्थं चक्रमुद्रया कृष्णध्यानेन त्रिसन्ध्यं ध्येयः । यदा मरकरोगदोषादिकं पुनः पुनरुत्पन्नं नाशयितुमिष्यते, अभूतस्य चानुत्पत्तिं तदा चन्दनेन सचन्द्रेण स्थालं लिप्त्वा छायाशुष्कं कृत्वा जातिलेखन्या द्वादशप्रतोलीप्राकारत्रयादिकं यथाऽऽगमं समवसरणमुत्कीर्य तदन्तर्नाभेयमूर्तिश्चैत्यद्रुमादि प्रातिहार्ययुग् लिख्यते । तदासनाधः सकुटुम्बोऽमुकोऽमुकग्रामोऽमुकश्चेत्यादि यथाकार्यमक्षराण्युत्कीर्यन्ते । तत्रा(त्र) स्थाले १०८ पुष्पैः सर्वसूरिमन्त्रं जपेत् । ततः स्थालं वृहत्कुण्डिकादौ त्रिगढीउपरि धृत्वा मन्त्रं भणद्भिरष्टोत्तरशत(१०८)कलशैः स्थालप्रतिमायाः स्नात्रं कृत्वा तत्पुष्पाम्बुचन्दनाद्येकत्र गर्गर्यादौ क्षिप्त्वा मार्याक्रान्ता नृ-तिर्यञ्चः पाय्यन्ते । आच्छोट्यन्ते च सर्वे सुस्थाः स्युः । तथा प्रातश्चतुर्दिक्षु मन्त्रमेतमूर्ध्वज्ञुरञ्जलिं[2] कृत्वा सर्वमेकैकवार भणेज्जनाकृष्टिः । तथा दीपोत्सवदिने उपोष्याचाम्लं वा कृत्वाऽस्य जापमारभेत शतपत्रीपुष्पैर्गरुडाक्षतैर्वा[3] १०८ प्रत्यहं जपेत् । एवं दिन २१ अभिग्रहः कोऽपि ग्राह्यः । वर्षं यावद्वृद्धिवृद्धिः स्यात् । पुष्पाण्यक्षतांश्च धारयेत् । इष्टाय दद्यान्महत्यै श्रिये । यद्विवा वासान्तः संचूर्ण्य वश्यार्थे शीर्षे क्षिपेत् । २१ दिने जापे पूर्णे पञ्चपीठाधिष्ठायकानां सरस्वती १-त्रिभुवनस्वामिनी २-विजया ३-जया ४-जयन्ती ५-नन्दा ६-भद्रा ७-लक्ष्मी ८-गणिपिटक १, इन्द्र ६४, विद्यादेवी १६, यक्ष २४, यक्षिणी २४-एवं १३७ । तथा गौतम १-क्षेत्रपाल १-गुरुपादु(दु)का, एवं १४० । मोदकाः खारिकादिफलानि वा पत्रपूगानि वा ढौकयेत् । कर्पूरादिना पूजयेत् । एवं प्रतिवर्षं कृते ऋद्धिः श्रीगच्छस्य । सर्वत्र स्मरणार्थमात्मानं मेरुचूलासिंहासनस्थाष्टदलाम्भोजकर्णिकास्थं प्रवचनमुद्रानिषन्नं(ण्णं ?) छत्रचामरेन्द्रादि ऋद्धिमन्तं श्रीगौतममेव चिन्तयेदैश्वर्यलाभः । तथाऽब्दवर्षाभावे गोमयगोमुखं तदन्तश्चान्दनं प्राकारं कारयेत्, तदन्तर्गौतमं सिंहासनादिश्रीमन्तं चिन्तयेत् । वार १०८ मन्त्रं स्मरेत् । मन्त्राक्षराणि तत्र विवक्षितद्रङ्गादौ दुग्धममृतं क्षरन्ति । स्थानमिदं प्राकारत्रयमयसमवसरणमध्यगतमुपरि पतता दुग्धेनामृतेन प्लाव्यते इति ध्यानं दध्यात् । मण्डयितुरुर्वी सेसिच्यतेऽब्द इति । तथाऽर्हतः सुधासारवर्षिच्छत्रत्रयतले पद्मासनेनार्हद्(र्ह)त्स्थापा-

---

१ प्रस्थानं पीठम् । २ ऊर्ध्वज्ञुः ऊर्ध्वं जानुकः ॥ ३ गरुडतण्डुलैः श्वेतशालिभिः ॥

स्थानं निविष्टं संवन्त्य सूरिमन्त्रं स्मरत परमैश्वर्यलाभ इति ॥

अथ श्रीसूरिमन्त्रपटलेखनविधिः—

श्रीसूरिमन्त्रपटे सप्तवलयानि। तत्र प्रथमवलये चतुर्विंशतिकोष्टका ।तेषु चतुर्विंशति-श्रीजिनेन्द्राम्नन्नामानि वा ॥ द्वितीयवलये अष्टादशकोष्टका. । तत्र कोष्टकषोडशके षोडश-लब्धिपदानि । सप्तदशकोष्टके—"णमि मन्तेमि नमोकारं किन्चा जमिय विन्तं पउ-जामि" ।अष्टादशकाष्टके—"सा मे विज्ञा पसिज्झउ स्वाहा"। विज्ञाणं पीठ । १। एतस्मिन् द्वितीयवलयेऽष्टादशकोष्टकेषु मुख्यमन्त्राक्षरसर्वसंख्या नवत्यधिकं शतम् १९०। विज्जाण पीठ इति तु पीठनाम ॥ तथा तृतीयवलये-एकादशकोष्टका । तेषु प्रथमे-"ॐ श्रीइन्द्रभूतये नमः । द्वितीये-"ॐ श्रीअग्निभूतये नमः" । तृतीये-"ॐ श्रीवायुभूतये नमः" । चतुर्थे-"ॐ श्रीव्यक्ताय नमः" । पञ्चमे-"ॐ श्रीसुधर्म्माय नमः" । षष्ठे-"ॐ श्रीमण्डितपुत्राय नमः" । सप्तमे-"ॐ श्रीमौर्यपुत्राय नमः" । अष्टमे-"ॐ श्रीअकम्पिताय नमः" । नवमे-"ॐ श्रीअचलभ्रात्रे नमः" । दशमे-"ॐ श्रीमेतार्याय नमः" । एकादशे-"ॐ श्रीप्रभासाय नमः" ॥ तथा चतुर्थवलये-"ॐ नमो भगवओ बाहुबलिस्स पन्हएद् समणस्स" इत्यादि आयरिय कालि स्वाहा । महाविद्यापीठम् । २ । अस्मिन् वलये मुख्यमन्त्राक्षरसप्तनवति (९७) । महा-विद्यापीठं इति तु पीठनाम ॥ तथा पञ्चमवलये-"ॐ इरियाए किरियाए" इत्यादि कालि महा-कालि स्वाहा । उपविद्यापीठम् ।।३। जाप १२००० जात्यादिभि पुष्पैर्जप्योऽयं सारस्वत । अस्मिन् वलये स्वाहा यावद् मूलमन्त्राक्षर(रा) अष्टत्रिंशद्(३८) ज्ञेया । ततो यदुपविद्या-पीठ तत् पीठनाम । ततो यज्ज्ञापादि तद् वलयपूरणाय मन्त्राक्षरस्वरूपज्ञापनाय च ज्ञेयम् ॥ तथा षष्ठवलये-"ॐ इरि इरि कालि किरि किरि कालि" इत्यादि "आयरिय आयरिय कालि स्वाहा" । मन्त्रपीठम् ।४। अस्मिन् वलये मुख्यमन्त्राक्षरा एकोनपञ्चाशत्(४९) । मन्त्र-पीठ इति तु पीठनाम ॥ तथा सप्तमवलये-"ॐ इरि मेरु किरि मेरु" इत्यादि "आयरिय मेरु स्वाहा" । मन्त्रराज ।५। जाप १००००० । अस्मिन् वलये मुख्यमन्त्राक्षरत्रयस्त्रिंशत्(३३), ततो मन्त्रराज इति पीठनाम । ततो जापप्रमाण वलयोद्वरितस्थानपूरणाय जापप्रमाणज्ञानाय च । तथा मध्ये सिंहासनोपरिस्थकमलोपविष्टा श्रीगौतमस्वामिमूर्ति । मूर्ति(र्ते)रुपरि उभयतो गजेन्द्रावभिषेकं कुरुत । मूर्त्तेर्दक्षिणपार्श्वे 'ॐ ह्रीं श्रीं' इति मन्त्रराजाक्षरत्रिक लिखेत् । वामपार्श्वे तु 'शिव-शान्ति तुष्टि पुष्टी कुरु कुरु स्वाहा' इत्यक्षराणि लेख्यानि। तथा मूर्त्ते पार्श्वे चतुर्दिक्षु चतु षष्टीन्द्राणा षोडशविद्यादेवताना चतुर्विंशतियक्षाणा चतुर्विंशतियक्षिणीना च स्थापनाय चतुर्भागीकृता अङ्का न्यस्या । यथा चतुर्दिक्षु षोडश-षोडश-रूपोऽङ्को लिख्यते । सर्वमीलने चतु षष्टि -एवं सर्वत्र ।

अथ श्रीसूरिमन्त्रपटलेखनविधि —

तथा पटस्थपीठपञ्चकलिखितसकलमन्त्राक्षरसंख्या सप्ताधिकचतुःशतीमाना (४०७) विज्ञेया। सप्तमेऽप्युक्तायां श्रीचन्द्रवाचनायां पुनर्या सर्वाक्षरसंख्या ३७६, स्वाहायुक्ता ३७८ प्रमाणा वर्त्तते। तत्र प्रणवः प्रतिपीठप्रान्ते स्वाहा चेत्यक्षराणि न गृहीतानि। तत्कारणं तत्र स्वयमेवोक्तमस्ति। अत्र च पटे यथार्हस्थाने प्रणवग्रहणात् प्रतिपीठप्रान्ते स्वाहाऽक्षरग्रहणाच्च अक्षरवृद्धिर्विज्ञेया। यदा तु अयं श्रीसूरिमंत्रः पटे लेख्यते, तदा अक्षर ४०७ मानो लेख्यः। यदा च श्रीचन्द्रवाचनायां तदा अक्षर ३७६, स्वाहासहितः ३७८ मानोऽयं ज्ञेयः। अत्राष्टादशकोष्टकलेखने पूज्या इदं कारणं वदन्ति, श्रीगच्छेशमन्त्रपटेऽष्टादशलब्धिपदानि स्युस्तत्र सप्तदशकोष्टके 'ॐ नमो सव्वलद्धीणं'। तन्याधः 'सा मे विज्जा पसिज्झउ स्वाहा' इति एतल्लब्धिपदद्वयफलं चेदम्—

अक्षीणमहानसिकाजापादक्षीणकोशता।
सर्वलब्धिजपान्नित्यं सर्वत्रास्खलितं यशः ॥१॥

विशेषकार्ये सुरभिद्रव्यैः पात्रे एतत्पदद्वयमालिख्याष्टोत्तरसहस्रपुष्पैर्जपेत्(१००८)। फलावाप्तिः स्यादेव। एवमत्रैकविंशत्यक्षरवृद्ध्या श्रीगच्छेशमन्त्रः पटेऽष्टाविंशत्यधिकचतुःशताक्षरमानो ज्ञेयः। इति तत्त्वम्।

इति श्रीमदञ्चलगच्छे श्रीसूरिमन्त्रपटलेखननामा यश्चिरं नन्दतात्॥

अथ ध्यानविधिः—

[1]शाब्दाज्जापान्मौनस्तस्मात्[2] सार्थस्ततोऽपि चित्तस्थः।
श्रेयानिह यदिवाऽऽत्मध्येयैक्यं[3] जापसर्वस्वम् ॥
अथवा [1]रेचक-[2]पूरक- कुम्भाः [3] [4]४-५-६ गुणत्रयं[7]स्थिरकृति-[8]स्मृती [9]हक्का।
[10]नादो [11]ध्यानं[12]ध्येयैकत्वं [13]तत्त्वं च जपभेदाः ॥१॥
एकान्तरम्यभूमावुपविश्य सुखासनो जिताक्षगणः।
गुरुभक्तः प्रकृतिशुचिर्दृढधर्म्मा ध्यानु(न)मुद्यतते ॥२॥
[4]ब्रह्माध्वना दिनकृतं विरिच्य रोषं तमोगुणं च समम्।
रागं च राजसगुणं कृष्णारुणमर्कमार्गेण ॥३॥

१ शाब्दाज्जापाद् मौनो जापः श्रेयान्। २ मौनादपि जापात् सार्थ [:]अर्थसहितो जापो रम्यः। ३ आत्मनः ध्येयस्य च ऐक्ये आत्मध्येयैक्यम्॥ ४ गुणत्रयं सत्त्वरजस्तमोगुणरूपम्। ५ जपभेदाः १३ वर्ण्यन्ते।

[1]आक्षिप्य [2]वीतरागं सत्त्वगुणं पूरकेण चन्द्रपथे ।
कुम्भेन स्थिरयित्वा ध्यायति शान्त्यै च बन्ध-मोक्षाय ॥४॥
विक्षिप्य सत्त्वमुज्ज्वलमाक्षिप्य रजो वशीकृतिस्तम्भे ।
आक्षिप्य तमश्च रुषा द्वेषोच्चाटनमृतीः कुर्यात् ॥५॥
यदिवा प्रागुक्तवक्ष्यमाणे मन्त्रपदे रेचनात् पुरः पश्येत् ।
आक्षिप्य पूरकेण तु हृदि कुम्भेन स्थिरीकुर्यात् ॥६॥
रेचकतो द्वेषमृती पूरकतो वश्यलाभसंक्षोभान् ।
कुम्भकतोऽरिस्तम्भं कुर्वीत त्रिगतमन्त्रपदैः ॥७॥
व्यालातपशीतरुजा क्लेशावेशेऽपि मधुरभक्तादौ ।
न क्षुभ्यति मन्त्रपदे लीनमनास्तत्स्थिरीकरणम् ॥८॥
मन्त्रस्य हृदि स्मरणं नासाग्रे दृक् स्मृतिः सकृत् सा [3]तु ।
द्वित्रिरियं परिवृत्तिर्निःशब्दहृदेकतां प्राप्ता ॥९॥
सहसा रोषहक्का मन्त्रान्ते क्षोभदा ग्रहापहा ।
यद्वा[4] निःश्वासे हस्तत्सहचारी स उच्छ्वासे ॥१०॥
शून्यशिरस्त[द्]द्वयमयमेके सर्वे स्मरन्ति मन्त्रपदम् ।
नादो भृङ्गध्वनिरिव [5]शङ्खिन्युत्थस्त्वनाहतो नादः ॥११॥
ध्यानं तु वर्णमण्डलतत्त्वानुगमन लब्धिमन्त्रपदम् ।
श्वेतं भू-जल-मण्डलतत्त्वगतं शान्तिपुष्टिदं विषहृम् ॥१२॥
अरुणं तु वह्निमण्डलतत्त्व प्राक् तत्त्वगं च वश्याय ।
पीतं भूमण्डलतत्त्वगं च कुर्यान्मुखं स्तम्भम् ॥१३॥

---

१ आक्षिप्य आकृष्य तत कुम्भेन मध्ये स्थिरयित्वा ध्यायति । २ गतराग सत्त्वगुण चन्द्रमार्गे पूरकेण । ३ तु पुन सा स्मृति द्वि त्रि क्रियते इय परिवृत्तिरुच्यते । कथभूता नि शब्दहृदेकता प्राप्ता । ४ यद्वा योगिनो हस इति मन्त्रपदं स्मरन्ति । योगिना नि श्वासे ह किंभूतो ह [ ][2] शून्यशिरा शून्य शिरसि(र०) यस्यासौ शून्य शिरा 'ह' इत्यर्थ । तस्य हस्य सहचारी स पर स उच्छ्वासे योगिनां ज्ञेय । तद्द्वयमयं हम इति । वर्ण-द्वयमय मन्त्रपदम् । ५ शङ्खिनी आदिकुण्डलिनी तत उत्थ, अनाहतो नाद.।

धूम्रं च वायुमण्डलतत्त्वगमुच्चाटनं सुहृद्द्वेषम् ।
कृष्णं व्योमान्तरगं मृत्युं कुर्वीत न प्रयुञ्जीत ॥१४॥
ध्येयः सातिशयजिनो गणधरदेव्यादिमन्त्रवर्णा वा ।
ध्येयेन प्राणानामैक्यं सर्वत्रगं तदेकत्वम् ॥१५॥
प्रविशति पूरक-कुम्भकपवने चान्द्रेऽर्द्धरात्रपूर्वान्हे(ण्हे) ।
वाच्योऽक्षरः शुभार्थे व्यस्ते व्यस्तार्थके इदं तत्त्वम् ॥१६॥
षट्कोणाकृतिदेहे विन्यस्या अक्षरास्तथा स्वान्तम् ।
तत्तद्वर्णाकारं कृत्वा ध्यायति स सिद्धिपदम् ॥१७॥
यत् पूर्वं नाभेय[ः] श्लोकत्रिंशतानि पुण्डरीकाय ।
गणभृन्मन्त्रं प्रददौ विद्यासिद्धः स मुक्तश्च ॥१८॥
[1]चन्द्रप्रभान्तमेवं तीर्थानुच्छेदतो बभूवास्य ।
एकैव वाचनातो भिन्ना भिन्ना तु वीरान्तम् ॥१९॥
श्रीगौतमाय मन्त्रं वर्णानेकाधिकविंशातिशतानि ।
स्वामी ददौ तदाज्ञावश्यः श्रीगौतमोऽप्येनम् ॥२०॥
द्वाविंशतश्लोकमितं चक्रे कालेन हीनमानममुम् ।
अध्युष्टश्लोकमितं पठिता श्रीदुःप्रसहसूरिः ॥२१॥
श्रीमत्सुधर्मगणभृत्संतानेऽप्येक एव मन्त्र इति ।
आराधि गौतमश्चेत् सर्वेऽप्याराधिता गुरवः ॥२२॥

॥ त्रिभिर्विशेषकम् ॥

अथाष्टविद्याः—

१सरस्वती २रोगापहारिणी ३विषापहारिणी ४बन्धमोक्षिणी ५आराधकश्रीसंपादिनी ६परविद्याच्छेदिनी ७दोषनिर्नाशिनी ८अशिवोपशमिनी ।

'जं जं विज्जं पउंजामि सा मे विज्जा पसिज्जउ' भव्वसत्ताराहगविसये अयं भावार्थः ॥ जातावेकवचनम् । आसां पदविभागः । प्रणव-नमोयुक्तानि पदानि सर्वाणि ईष्टं -कार्यं जनयन्ति । प्रणवं विना नमो इति मोक्षबीजम् । जिन–अवध्यादयो ध्येयाः ।

१ अतः श्रीचन्द्रप्रभजिनात् ॥

"चउदसपुव्वीणं पयाणुसारीणं एगारसंगीणं उज्जुमईणं विउलमईणं एगसिनियार्दि मागसयं मे पमिज्झउ स्वाहा" अनया रीत्या समस्तकार्यमुच्चारणीयम् ॥ १ ॥

आमोसहिलद्धीणं विप्पोसहिलद्धीणं खेलोसहिलद्धीणं सव्वोसहिलद्धीणं-अन्यानां कुष्टादिरोगे उपस्थितेऽनया शरीरं स्पृश्यते ताम्बूलं कलापानीयं अभिमन्त्र्य दीयते। इमा श्रीमण्डेनालिख्य सुरभिद्रव्यै पूजयित्वा कांस्यपात्रे दुग्धेन प्रक्षाल्य पाय्यते। एतान्यक्षराणि आराधकोपरि दुग्धममृतं वा वर्षन्तीति ध्यानं महारोगे नान्यत्र रोगहरी रोगहरी ॥ २ ॥

आसीविसलद्धीणं खीरासवलद्धीणं महुआसवलद्धीणं अमियासवलद्धीणं-एषा विषापहारिणी, अनया शरीरस्पर्शादि पूर्वरीत्या पूर्वोक्तध्यानम् ॥ ३

जिन-अवधि,-परमावधि,-अनन्तावधि केवलित्रयम्। एतानि यन्त्रमोक्षिणी। अत्र पूर्वरीत्या ध्यानं न स्पर्शनादि। एतेषां श्रीखण्डलिखितानां अधोभागे बद्धनामालिख्य निरन्तरं पूजाध्यानं च, कार्ये महता महाबन्धमोक्षे नान्यत्र ॥ ४

बीयबुद्धीणं कुट्ठबुद्धीणं संभिन्नसोयाणं अक्खीणमहाणसलद्धीणं एतानि श्रीसंपादिन्या ध्यानं पूर्वरीत्या निरन्तरम्। महता सुरथाननिवेशितश्रीणामलाभोपद्रवे प्रयोक्तव्यम् ॥ ५

वग्गतवचरणचारीणं दित्ततवाणं तत्तनवाण पडिम सा पडिवन्नाणं-एतानि परविद्याच्छेदिन्या ध्यानं वज्रपञ्जरमध्यस्थोऽहम् ॥ ६

जंघाविज्जाचारणाणं वेउव्वियइड्ढिपत्ताणं आगामगामिणं-एतानि दोषनिर्नाशिन्या ध्यानं सुरासुरपरिस्कृतोऽहं स सर्वव्यापी सर्वत्रगामी। अहं एतेषु ध्यायमानेषु क्षुद्रदोषः समीपस्थो न भवति। महता महादोषे प्रयोजनीयम् ॥ ७

१मणपज्जवनाणीणं २सीयलेसाणं ३तेउलेसाणं ४आसीविसभावणाणं ५दिट्ठीविसभावणाणं ६चारणसमणभावणाणं ७महासमणभावणाणं ८ तेयग्गिनिसग्गाणं नमोयुक्तविशेषणप्रत्येकप्रातिहार्यस्य पदानि। सप्रणवनमोयुक्तद्वात्रिंशत्संख्यस्तुतिपदानि च अशिवोपशमिन्याम्, यथा- १जिण-२ओहि-३परमोहि-४अणंतोहि-५अणंताणंतोहि-६केवलि-७भवत्थकेवलि-८अभवत्थकेवलि-९उज्जुमइ-१०विउलमइ-११वेउव्वियलद्धि-१२सव्वलद्धि-१३पण्हासमण-१४ जंघाचारण-१५ विज्जासिद्ध-१६ आगामगामि-१७ आमोसहि-१८विप्पोसहि-१९खेलोसहि-२०जल्लोसहि-२१सव्वोसहि-२२ आसीविस-२३ अट्ठंगनिमित्तधारय-२४वयणविसत्तलेस-२५ सीयलेस-२६ चउदसपुव्वि-२७ दसपुव्वि-२८ एगारसंगि-२९ संभिन्नसोय-३० दुवालसंगी-३१सव्वसिद्ध-३२ग्गतवचरणचारित्तश्रीप(स)ष्टविलिप्तकांस्यपात्रे आलिखत (खित) सचतुर्द्वारप्राकारत्रयरूपे समवसरणे 'ॐ अर्हं श्रीयुगादिनाथाय स्वाहा' मध्ये इत्यादि लिखेत। तदधोभागे आर्त्तस्य नाम। ततः पूर्वस्यां 'विनीतायां राज्यं करोति' इत्यालेख्यम्। उत्तरस्यां 'पुत्राणां राज्यं ददाति, व्रतं गृह्णाति इक्षुरसेन श्रेयांस प्रीणयति' इति लिखेत्।

दक्षिणस्यां 'मौनी विहरति'। पश्चिमायां 'उत्पन्नकेवलो भव्यान् प्रबोधयति'। ततो निखिल-मन्त्रस्य करेण जापः १०८। सुरभिद्रव्यैः सितकुसुमैः पूजा कार्या। पूर्वतः ततो भक्तामरस्तवेन स्तवनीयः। ततश्चैत्यवन्दनां विधाय शान्ति भणित्वा श्रीप(ख)ण्डसंपृक्तजलेन अष्टोत्तरकलश-शतेन स्नात्रं क्रियते। तेन स्नात्रेणार्त्तोऽभिषिच्यते। यन्मण्डले लिखितं तदेव ध्यानम्। अथवा युगादिनाथजन्मकल्याणकम्। यादृग्रीत्या कल्पे। एतद् वादे विवादे रणे राजकुले राज्ञि प्रत्यर्नाके नित्योपद्रवे विघटिते कार्ये महति रोगे चिरदोषे चिरदोषग्रस्तेऽन्यस्मिन् विषमाप-त्स्थाने महतां सम्यक्त्वशालिनां स्थिरधर्माणं(णां) आराधितरत्नत्रयाणां पदस्थानां प्रयोजनीयं नान्येषाम्। अथवा 'यैः शान्तरागरुचिभिः' इत्यादिको 'ज्ञानं यथा त्वयि विभाति' एतदन्त-स्तवो नित्यं भणनीयः। सर्वेषामात्मनः सदा शान्तिकम्, अयमेव श्रीपुण्डरीकादेशोऽतिस्पष्टः। गणधरविद्यागर्भितं वृत्ताष्टकमिदं प्रातरेव भणनीयम्, नान्यत्र वेलायाम्। अतः सर्वकार्य-प्रसाधकं विद्यापीठम् ॥ [८]

अथ स्मरणाविधिः—

स्तोकाम्भःस्नातोऽव्यङ्गवासा ऐर्यापथिकीं प्रतिक्रम्य शुचिविविक्तदेशे प्राग्मुख उत्तरा-मुखो वा पद्मासनस्थः सूरिः पुरः समवसरणं मुक्त्वा सूरिमन्त्रसाधनाप्रारम्भ[ः] प्रोक्तरीत्या भूमिशुद्ध्यादि नवाधिकारान् कृत्वा, 'ॐ ॐ (ह्रीं) नमः' इति मन्त्रेण संवृतसमवसरणोपरि त्रिर्वासक्षेपं विधाय समवसरणं छोटयेत्। ततः सूरिमन्त्रपटं वासादिनाऽभ्यर्च्य पूर्वोक्तरीत्यैव 'आं क्रों ह्रीं श्रीं' इत्यादिना श्रीगौतमं समाहूय मुद्रापञ्चकेन मन्त्रपठे स्थापयित्वा नखच्छोटि-कामृतीकरणगन्धार्चाः कृत्वा स्वर्णाम्भोजस्थं सप्रातिहार्यं श्रीगौतमं ध्यात्वा मुद्रापञ्चकेन सूरि-मन्त्राधिष्ठायकान् पूर्वादिदिक्षु निवेश्य नखच्छोटिकामृतीकरणगन्धार्चाः कृत्वा 'नमः सद्-गुरुभ्यः' इत्युच्चार्य १ सौभाग्य– २ परमेष्ठि– ३ प्रवचन– ४ सुरभि– ५ अञ्जलिमुद्राभिः पञ्चपीठमयं संपूर्णसूरिमन्त्रं जपेत्। आम्नायोऽत्र—

आद्या[1] वश्यक्षोभे सुरभिः शान्ते[2] तृतीयका ज्ञाने।
परमेष्ठी सर्वार्था अञ्जलिमुद्रात्मसेवायै ॥

अतः सौभाग्यमुद्रया सर्वाणि लब्धिपदानि पञ्चपीठानि च ह्रीं पूर्वाणि स्वाहान्तानि तु पीठानि ।१। परमेष्ठिमु० (मुद्रा)–ॐ पूर्वाणि स्वाहान्तानि ।२। प्रवचनमुद्रा–श्रींपूर्वाणि स्वाहा-न्तानि ।३। सुरभिमुद्रा–अञ्जलिमुद्रा–या च यथावस्थितम्। श्रीअञ्चलगच्छेशश्रीआर्यरक्षित-सूरिक्रमागतं ३७८ अक्षरमानं सूरिमन्त्रं जपेत्। ततः पूर्वोक्तयुक्त्या विसर्जनं कृत्वा स्तुतिं पठेत्। सा चैवम्—

---

१ मुद्रा। २ शान्ते तुष्टि-पुष्टिप्रभृतिकार्ये ॥

## स्तुति ।

पढमपए सुनिविट्ठा विज्जाए सूरिणो गुणनिहिस्स ।
गोयमपयभत्तिजुया सरस्सई मह सुह देउ ॥ १ ॥
दुइयपीढे निविट्ठा इमाए विज्जाए निरुवममहप्पा ।
तिहुयणसामिणिनामा सहस्सभुयसंजुया सती ॥ २ ॥
सिरिगोयमपयकमल झायती माणुसुत्तरनगस्स ।
सिहरम्मि ठिया निच्च सघस्स य मह सुह देउ ॥ ३ ॥
पउमदहपउमनिलया चउसट्ठिसुराहिवाण महमहणी ।
सव्वगभूसणधरा पणमती गोयममुणिंद ॥ ४ ॥
विजया जया-जयती-नंदा-भद्दासमन्निया तइए ।
विज्जापए निविट्ठा सिरिसिरिदेवी सुह देउ ॥ ५ ॥
विज्जाचउत्थपीढे निवेसिओ गोयमस्स अभिरुइओ ।
गणिपिडगजक्खराओ अणपणपन्नीकयपइट्ठो ॥ ६ ॥
सोलससहस्सजक्खाण सामिओ अतुलियबलो उ वीसभुओ ।
जिणसासणपडणीय महरिउवग्ग निवारेओ ॥ ७ ॥
सोहम्मकप्पवासी एरावणवाहणो उ वज्जकरो ।
सेवइ तियसाहिवई सगोयम मतवरराय ॥ ८ ॥
ईसाणकप्पवासी सूलकरो वसहसाठिओ निच्च ।
सेवइ तियसाहिवइ सगोयम मतवरराय ॥ ९ ॥
इयकप्पे निवासी सिरिसमणो नामओ य चक्ककरो ।
सेवइ तियसाहिवई सगोयम मतवरराय ॥ १० ॥
सिरिबंभलोयवासी सोमणसो नामओ य बहुसत्थो ।
सेवइ तियसाहिवई सगोयम मतवरराय ॥ ११ ॥
अट्ठकुलनागराया सहसफडो सिरिनिविट्ठकरमउलो ।
सेवइ धरणिंदो वि य सगोयम मतवरराय ॥ १२ ॥

रोहिणिपमुहादेवी चउसट्ठिसुराहिवा तहा अन्ने।
सेवइ गोयमचलणे जक्खा-जक्खिणिचउव्वीसं ॥ १३ ॥
कणयमयसहसपत्ते कमलम्मि य संठिओ य लद्धिजुओ।
बहुपाडिहेरकलिओ झायव्वो गोयममुणिंदो ॥ १४ ॥
'ऑं क्रौं ह्रीं श्रीं' एएणं मंतेण झाणारंभे ठविज्जए निच्चं।
अंजलिकरमुद्दाए संनिहियसुराण समवाओ ॥१५॥
संनिहियसुरवराणं उस्सग्गो कीरए सुपूयाय।
कप्पूरधूववासेहिं सुव्वया विहियबंभवओ ॥ १६ ॥
थोवजलविहियन्हाणो वरवत्थविभूसिओ य तिक्कालं।
कम्मक्खयहेउं जो समरइ विज्जं इमं लक्खं ॥ १७ ॥
सोहग्ग य परमिट्ठी सुरहीपवयणकरंजली झाणे।
मुद्दापंचगमेयं कायव्वं सव्वकालं पि ॥ १८ ॥
किं चिन्तामणि कामधेणु कप्पद्दुम सुंदर
नवनिहि चउदसरयणपवर चक्कित्तण मणहर।
राजा सुवयणि सिरिसूरिविज्ज गोयमसुपइट्ठिय
भुवणत्तय अक्खलियमहप्प निट्ठियकम्मट्ठय ॥ १९ ॥

इति स्तुतिः ॥

औत्सुक्ये स्मरणायोग्यस्थानाभावे वा मन्त्रपटमभ्यर्च्य सौभाग्याय सौभाग्यमुद्रया, अधिष्ठायकानां सजीवितापादनाय सुरभिमुद्रया, कर्मक्षयाय परमेष्ठिमुद्रया, क्षुद्रोपद्रवशान्त्यै गरुडमुद्रया, अरिक्षयार्थं चक्रमुद्रया एकैकवारं सर्वमन्त्रं जपेत्। नवरं सौभाग्यमुद्रा ह्रींपूर्वाणि पीठानि शेषमुद्राचतुष्के ॐ पूर्वाणि पीठानीति। ततः सर्वमन्त्रं १०८ अथ ५४ अथ ३६ यथार्हं स्मरेत्। मनःस्थैर्याय शीर्षे हृदि नाभौ वा १६ दलमम्भोजं ध्यात्वा प्रतिपत्रं सृष्ट्या एकैकं लब्धिपदं ध्यायेत्। स्मरणां कुर्वन्नक्षरशुद्धिमक्षरसंख्यां पीठानामाराधनाविधिं अधिष्ठातॄंश्च चिन्तयेत्। गुरूपदेशं विस्मार्य शुकपाठं न कुर्यात्।

संक्षिप्तस्मरणाधिकारः—

समवसृतौ मुख्योऽक्षोवीरः शेषाक्षतश्चतुर्वक्त्रः।
[1]अग्न्यादौ तु कपर्दीन्यासा द्वादशसभाश्च स्युः ॥ १ ॥

---

१ आग्नेयकूणादिचतुर्दिक्षु कपर्दीनां त्रिक-त्रिकन्यासात् १२ सभा ज्ञेयाः।

तत्रैव गौतमोऽहं कर्पूराद्यैस्तमर्चयेद् भक्त्या ।
एवं च नाभिकमले ध्यायन् सूरिः स सर्वज्ञः ॥ २ ॥
मुख्योऽर्हन् पूर्वस्यां सिद्धा [१]सौम्येऽथ गौतमः स्वामी ।
याम्ये वोपाध्यायः [२]साधुरथश्चेति पूज्यपदाः ॥ ३ ॥
मध्ये कपर्दिकानां न्यासः सचतुर्गतिस्तु संसारः ।
तत्र ममैते शरणं तदर्चयेत् पञ्च पूज्यपदान् ॥ ४ ॥
अक्षाणां मुष्टित्रयमर्पयति गुरुस्तथैव मुष्टिगतः ।
त्रिजगद्व्यवहारोऽयं संकेतः स्याज्जनसमक्षम् ॥ ५ ॥
वासाहुतिनिक्षेपः शङ्खाग्निमुद्रयाऽन्नलाभाय ।
पल्लवमुद्रादर्शनमिह शिष्याणां समृद्ध्यै स्यात् ॥ ६ ॥
विजितेन्द्रियविषयमना जितदम्भक्रोधमदमायः ।
उभयकुलशुद्धसाधुर्गृहीतसिद्धान्तसारमतिः ॥ ७ ॥
सुविहितयोगोद्वहनः शुद्धाचारो जिनांह्रिगुरुभक्तः ।
श्रीवर्धमानविद्याकल्पे योग्योऽस्य सूरिमन्त्रे च ॥ ८ ॥
पूर्वाद्यष्टक्रमतः १स्तम्भं २दहनं च ३मृत्यु–४विद्वेषौ ।
५-६वश्योच्चाटन–७-८शान्तिकमीशाने सर्वकर्माणि ॥ ९ ॥
पूर्वाद्यष्टक्रमतः १स्तम्भ–२द्वेषावथा३कृर्षि ४[द्वि?]ष्टम् ।
५-६शान्त्युच्चाटन–७मारणमिति केचिदप्याहुः ॥ १० ॥
सूर्योदयादि चैत्राद्या मासाः पञ्चघटीप्रमाः ।
एवं दिवानिशं वर्षे वसन्तादिऋतुः स्मृतः ॥ ११ ॥
आकृष्टि(१)-रुषो(२)च्चाटन(३)-मारण(४)-पुष्टिश्च(५)शांतिकं(६)क्रमशः।
षड्ऋतुषु ज्ञेयमिदं यदिवैके कालविधिमाहुः ॥ १२ ॥
पूर्वान्हे(ह्ने)(१) वश्यकर्म्माणि मध्याह्ने(२) प्रीतिनाशनम् ।
उच्चाटनमपरान्हे(ह्ने)(३) सन्ध्यायां मारणं स्मृतम् ॥ १३ ॥

---

१ सोमे उत्तरस्याम् । २ अथश्चेति पश्चिमायां दिशि ॥

शान्तिकर्म्मार्द्धरात्रे च(५) प्रभाते(६) पौष्टिकं तथा ।
वश्यं मुक्त्वाऽन्यकर्म्माणि सव्यहस्तेन योजयेत् ॥ १४ ॥
शान्तौ(१) पुष्टौ(२) मुक्तौ(३) श्वेतं(१) क्षोभेऽतिपीतमत्यरुणम् ।
वश्याकृष्टौ(३) द्वेषोच्चाटे धूम्रं मृतौ महाकृष्णम् ॥ १५ ॥

ध्यानमिति शेषः ॥

पार्थिवे[1](१) स्तम्भनं पुष्टिर्वश्यं(२) शान्तिर्जलात्मके ।
आग्नेये(३) कर्षणं दाहो वायौ(४) द्वेषो मृतिः परे ॥ १६ ॥
[2]वश्यं(१) बालस्वरे द्वैते[3] आकृष्टिं(२) च युवात्मके ।
शान्ति(३) वश्यं च पुष्टिं च द्वैष-स्तम्भौ च वृद्धके ॥ १७ ॥
मृत्युं मृत्युस्वरे कुर्यादाद्यपञ्चस्वरक्रमात् ।
बालादिकस्वरो ध्याता कार्यानुमितमानसः ॥ १८ ॥
नमोऽर्चनकाले(१) होमे(२) स्वाहा शान्तौ(३) स्वधा कृषौ(४)।
वषट् क्षोभेऽथ(५) संवौषट् द्वेषे फडिति थे मृतिः ॥ १९ ॥
स्फटिक(१)-प्रवाल(२)-मुक्ता(३)-चामीकर(४)-पुत्रजीवमालाभिः(५)।
बीजैः(६) पद्मोत्थैरथ शान्त्याद्युचितं जपं कुर्यात् ॥ २० ॥
पद्मासनाद्यमासनमथ मुद्राः सपरमेष्ठिमुद्राद्याः ।
सितपत्रादिभिरर्चा कुङ्कुम-गोरोचनादिलेख्यदलम् ॥ २१ ॥
दण्डासनं(१) स्वस्तिक(२)-पङ्कजे(३) च
स्यात् कुर्कुटं(४) वज्रयुतं(५) च भद्रम्(६)।
आकर्षणे(१) वश्य(२)—वधे(३) च रोधे(४)
शान्तौ(५) तथा द्वेष(६)विधौ वदन्ति ॥ २२ ॥

इत्यासनानि ॥

आकृष्टि(१)—वश्य(२)—वध(३)—रोध(४)—विबोध(५)-शान्ति(६)-
विद्वेषणेषु शृणि(१)रम्बुज(२)—वज्र(३)—शङ्खाः(४)।

---

१ पृथिवीतत्त्वे स्तम्भनं क्रियते। एवमग्रेऽपि त्रिकं जलतत्त्वे १।
२ तथा स्वराः पञ्च सन्ति तत्र बालस्वरे वश्यं कार्यम्।
३ द्वैते द्वितीये कुमारस्वरे आकर्षणं कार्यम्। युवस्वरे शान्त्यादि।

तत्रैष गौतमोऽहं कर्पूराद्यैस्तमर्चयेद् भक्त्या ।
एवं च नाभिकमले ध्यायन् सूरिः स सर्वज्ञः ॥ २ ॥
मुख्योऽर्हन् पूर्वस्यां सिद्धा [1]सौम्येऽस्य गौतमः स्वामी ।
याम्ये वोपाध्यायः [2]साधुरधश्चेति पूज्यपदाः ॥ ३ ॥
मध्ये कपर्दिकानां न्यासः सचतुर्गतिस्तु संसारः ।
तत्र ममैते शरणं तदर्चयेत् पञ्च पूज्यपदान् ॥ ४ ॥
अक्षाणां मुष्टित्रयमर्पयति गुरुस्तथैव मुष्टिगतः ।
त्रिजगद्व्यवहारोऽयं संकेतः स्याज्जनसमक्षम् ॥ ५ ॥
वासाहुतिनिक्षेपः शङ्खाग्निमुद्रयाऽन्नलाभाय ।
पल्लवमुद्रादर्शनमिह शिष्याणां समृद्ध्यै स्यात् ॥ ६ ॥
विजितेन्द्रियविषयमना जितदम्भक्रोधमदमायः ।
उभयकुलशुद्धसाधुर्गृहीतसिद्धान्तसारमतिः ॥ ७ ॥
सुविहितयोगोद्वहनः शुद्धाचारो जिनांह्रिगुरुभक्तः ।
श्रीवर्धमानविद्याकल्पे योग्योऽस्य सूरिमन्त्रे च ॥ ८ ॥
पूर्वाद्यष्टकमतः १स्तम्भं २दहनं च ३मृत्यु–४विद्वेषौ ।
५-६वश्योच्चाटन–७-८शान्तिकमीशाने सर्वकर्माणि ॥ ९ ॥
पूर्वाद्यष्टकमतः १स्तम्भ–२द्वेषावथा३कृष्टिं ४[द्वि?]ष्टम् ।
५-६शान्त्युच्चाटन–७मारणमिति केचिदप्याहुः ॥ १० ॥
सूर्योदयादि चैत्राद्या मासाः पञ्चघटीप्रमाः ।
एवं दिवानिशं वर्षं वसन्तादिऋतुः स्मृतः ॥ ११ ॥
आकृष्टि(१)-रुषो(२)च्चाटन(३)-मारण(४)-पुष्टिश्च(५)शांतिकं(६)क्रमशः।
षड्ऋतुषु ज्ञेयमिदं यदिवैके कालविधिमाहुः ॥ १२ ॥
पूर्वान्हे(ह्णे)(१) वश्यकर्म्माणि मध्याह्ने(२) प्रीतिनाशनम् ।
उच्चाटनमपरान्हे(ह्णे)(३) सध्यायां मारण स्मृतम् ॥ १३ ॥

---

१ वामे उत्तरस्याम् । २ अधश्चेति पश्चिमायां दिशि ॥

शान्तिकर्म्मार्द्धरात्रे च(५) प्रभाते(६) पौष्टिकं तथा ।
वश्यं मुक्त्वाऽन्यकर्म्माणि सव्यहस्तेन योजयेत् ॥ १४ ॥
शान्तौ(१) पुष्टौ(२) मुक्तौ(३) श्वेतं(१) क्षोभेऽतिपीतमत्यरुणम् ।
वश्याकृष्टौ(३) द्वेषोच्चाटे धूम्रं मृतौ महाकृष्णम् ॥ १५ ॥

ध्यानमिति शेषः ॥

पार्थिवे[१](१) स्तम्भनं पुष्टिर्वश्यं(२) शान्तिर्जलात्मके ।
आग्नेये(३) कर्षणं दाहो वायौ(४) द्वेषो मृतिः परे ॥ १६ ॥
[२]वश्यं(१) बालस्वरे द्वैते[३] आकृष्टिं(२) च युवात्मके ।
शान्तिं(३) वश्यं च पुष्टिं च द्वैष-स्तम्भौ च वृद्धके ॥ १७ ॥
मृत्युं मृत्युस्वरे कुर्यादाद्यपञ्चस्वरक्रमात् ।
बालादिकस्वरो ध्याता कार्यानुमितमानसः ॥ १८ ॥
नमोऽर्चनकाले(१) होमे(२) स्वाहा शान्तौ(३) स्वधा कृषौ(४)।
वषट् क्षोभेऽथ(५) संवौषट् द्वेषे फडिति थे मृतिः ॥ १९ ॥
स्फटिक(१)-प्रवाल(२)-मुक्ता(३)-चामीकर(४)-पुत्रजीवमालाभिः(५)।
बीजैः(६) पद्मोत्थैरथ शान्त्याद्युचितं जपं कुर्यात् ॥ २० ॥
पद्मासनाद्यमासनमथ मुद्राः सपरमेष्ठिमुद्राद्याः ।
सितपत्रादिभिरर्चा कुङ्कुम-गोरोचनादिलेख्यदलम् ॥ २१ ॥
दण्डासनं(१) स्वस्तिक(२)-पङ्कजे(३) च
स्यात् कुर्कुटं(४) वज्रयुतं(५) च भद्रम्(६)।
आकर्षणे(१) वश्य(२)—वधे(३) च रोधे(४)
शान्तौ(५) तथा द्वेष(६)विधौ वदन्ति ॥ २२ ॥

इत्यासनानि ॥

आकृष्टि(१)—वश्य(२)—वध(३)—रोध(४)—विबोध(५)-शान्ति(६)-
विद्वेषणेषु शृणि(१)रम्बुज(२)—वज्र(३)—शङ्खाः(४)।

---

१ पृथिवीतत्त्वे स्तम्भनं क्रियते। एवमग्रेऽपि त्रिकं जलतत्त्वे १।
२ तथा स्वराः पञ्च सन्ति तत्र बालस्वरे वश्यं कार्यम्।
३ द्वैते द्वितीये कुमारस्वरे आकर्षणं कार्यम्। युवस्तरे शान्त्यादि।

योध(५)–प्रवाल(६)सहिताः षडमूर्हि मुद्राः
विद्रावणाय दुरितस्य सदा विदध्यात् ॥ २३ ॥
सौवर्ण-रजत-कांस्यजपात्रं तत्रैव युज्यते साधोः ।
संघस्य कार्यहेतोः सर्वं युज्येत नान्यत्र ॥ २४ ॥
प्रायोऽत्र सूरियन्त्रं महतां कार्ये शुभे महति योज्यम् ।
तेन विलिख्य सुपात्रे कर्पूराद्यैरिदं पूज्यम् ॥ २५ ॥
पूरक-रेचकयोगादाह्वान-विसर्जने करोतु बुधः ।
पूजाभिमुखीकरणस्थापनकर्माणि कुम्भकतः ॥ २६ ॥
मोक्ष(क्षा)(१)-भिचार(२)–लक्ष्मी(३)-शान्त्या(४)कृष्टि(५)[:]
क्रमेण जापविधौ ।
अङ्गुष्ठादिकनिष्ठान्तं यावद् वर्त्तेऽक्षसूत्रविधौ ॥ २७ ॥
स्तम्भेऽथ(१) शान्ति(२)–पुष्ट्योः वश्ये(३) उच्चाटने(४) मृतौ क्रमतः ।
भूम्यादिमण्डगतं ध्यायति तदर्थकृते - - ॥ २८ ॥
पूर्वाह्ने (ह्ण) मध्याह्ने मध्यनिशायां निशान्त्यके यामे ।
वश्यं स्तम्भं शान्तिं पुष्टिं कुर्यात् क्रमेणैवम् ॥ २९ ॥
दीपन१-पल्लव२-संपुट३-रोध४-ग्रथना५-ऽस्वदर्भणैः६ कुर्यात् ।
शान्ति-द्वेप-वशीकृति–बन्धन–आकर्षण–स्तम्भान् ॥ ३० ॥
आदौ नामनिवेशो दीपनमन्ते च पल्लवो ज्ञेयः ।
तन्मध्यगतं संपुटमथादिमध्यान्तगो रोधः ॥ ३१ ॥
ग्रथनं वर्णान्तरितं द्व्यक्षरमध्यस्ततो विदर्भः स्यात् ।
षट्कर्मकरणमेतज्ज्ञात्वाऽनुष्ठानमाचरेद् विद्वान् ॥ ३२ ॥
दिक्कालमुद्राऽऽसनपल्लवादि–
भेदं परिज्ञाय जपेत् सुमन्त्री ।
न चान्यथा सिद्ध्यति तस्य मन्त्रः
कुर्वन् सदा तिष्ठतु मन्त्रजापम् ॥ ३३ ॥

केचिच्च वश्या१-कृष्टि२-स्तम्भन३-मारण-४विद्वेष५-
चलन६-शान्तिकं७ पुष्टिम्८ ।
कुर्यात् सोम१-¹यमामर२-३-²हराग्नि४-५-³मरुदुदधि-६-७
निर्ऋति८-दिग्वदनः ॥ ३४ ॥

इत्यपि तथा—

महती बृहती उक्ता न्यासीति चतुर्विधेह मन्त्रोक्तिः ।
महती स्वपाठसिद्धिर्बृहती चाल्पजपबहुसिद्धिः ॥ ३५ ॥
उक्ताऽथ गौतमी सा जाप-तपोऽर्चाद्य पूर्वभृद् यावत् ।
न्यासीत्येकत्र पदे बहुदेवीनामविन्यासः ॥ ३६ ॥

अत्र पूर्वभृद् यावदिति, पूर्वभृतो यावदाद्यास्तिस्रः, तदनु न्यासीपदे देव्यादिनामन्यास इत्यर्थः । तथा चतुर्धा मन्त्रजातिः । १ आणवः २ कार्मजः ३ प्रवर्त्तकः ४ निवर्त्तकः । आणवः सत्कर्मबीजः । कार्मजः सत्कर्मोदयः । प्रवर्त्तकः सत्कर्म प्रवर्त्तयिता । निवर्त्तको मोक्षहेतुः । तथा चतुर्धा मन्त्रस्मरणरीतिः । १ वैखरी २ पश्यन्ती ३ मध्यमा ४ परा । वैखरी स्पष्टोच्चारणा । पश्यन्ती अर्थदृष्टिः । मध्यमा हृदये सर्ववर्णव्यापका । परा ध्वनिरहित-सर्ववर्णस्थानस्पर्शिका ।

अणिमा१ महिमा२ चेति लघिमा३ गरिमा४ तथा ।
प्रो(प्रा)काम्या ६प्रहतीशित्व-वशित्वेत्यष्ट७-८ महासिद्धयः ।

इह मुद्राः शास्त्रान्तरेषु भूयस्यो दृश्यन्ते परं सूरिमन्त्रोपयोगिन्यः सप्तदश । तद् यथा—उत्तानहस्तद्वयेन वेणीबन्धं विधायाङ्गुष्ठाभ्यां कनिष्ठिके तर्जनीभ्यां च मध्यमे संगृह्यानामिके समीकुर्यादिति परमेष्ठिमुद्रा १ । आत्मनोऽभिमुखदक्षिणहस्तकनिष्ठिकया वाम-कनिष्ठिकां संगृह्याधः परिवर्त्तितकराभ्यां गरुडमुद्रा २ । वामहस्ततले दक्षिणहस्तमूलं संनिवेश्य करशाखा विरलीकृत्य प्रसारयेदिति चक्रमुद्रा ३ । परस्पराभिमुखौ ग्रथिताङ्गुलीकरौ कृत्वा तर्जनीभ्यामनामिके गृहीत्वा मध्यमे प्रसार्य तन्मध्येऽङ्गुष्ठद्वयं निक्षिपेदिति सौभाग्यमुद्रा मध्यमसौभाग्यहेतुः ४ । अत्रैवाङ्गुष्ठद्वयस्याधः कनिष्ठिकां तदाक्रान्ततृतीयपर्विकां न्यस्येदिति सबीजसौभाग्यमुद्रा सौभाग्योत्कर्षहेतुः ५ । दक्षिणाङ्गुष्ठेन तर्जनीं संयोज्य शेषाङ्गुली-

---

१ अमरो धनदः, तस्य दिग् उत्तरा । २ हर ईश ईशानकूण : । ३ उदधिः समुद्रः, तदधिष्ठाता वरुणः, तस्य दिग् ॥

प्रसारणेन वामहस्तं हृदि न्यसेदिति प्रवचनमुद्रा ६। उभयोः करयोरनामिका-मध्यमे परस्परानभिमुखे ऊर्ध्वीकृत्य मीलयेत्, शेषाङ्गुलीः पातयेत् पर्वतमुद्रा ७। अन्योऽन्यग्रथिताङ्गुलीषु कनिष्ठिकाऽनामिकयोर्मध्यमा-तर्जन्योश्च योजनेन गोस्तनाकारा सुरभिमुद्रा ८। दक्षिणहस्तस्य तर्जनीं वामहस्तमध्यमया संदधीत, मध्यमां च तर्जन्या, अनामिकां कनिष्ठिकया, धेनुमुद्रेत्यन्ये ९। उत्तानौ किञ्चिदाकुञ्चितकरशाखौ पाणी धारयेदञ्जलिमुद्रा १०। हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वाङ्गुष्ठसंयोजनेनावाहनी ११। इयमेवाधोमुखा स्थापनी १२। संलग्नमुष्ट्युच्छ्रिताङ्गुष्ठौ करौ सन्निधानी १३। तावेव गर्भगाङ्गुष्ठौ सन्निरोधिनी १४। मुष्टिं बद्ध्वा प्रसारिततर्जनिका-मध्यमोपरिनिवेशिताङ्गुष्ठावगुण्ठनमुद्रा १५। दक्षिणकरेण मुष्टिं बद्ध्वा तर्जनी-मध्यमे प्रसारयेदित्यस्त्रमुद्रा १६। प्राग्वस्य पुष्पादेरुपरि संहारेण हस्तं प्रसार्य कनिष्ठादि-तर्जन्यन्तानामङ्गुलीनां क्रमसंकोचनेनाङ्गुष्ठमूलानयनाद् विसर्जनमुद्रा १७॥

ॐ श्री गौतमाय नमः।

नत्वा जिनं गुरुं किञ्चिज्ज्ञानं वक्ष्यामि सिद्धिकृत्।
पञ्चाशल्लब्धयः सुष्ठुव्रतभाजाममूर्मताः॥१॥
१जिनावधि२-परा३-ऽनन्ता४-५नन्तानन्तावधेर्जिनाः।
सर्वावधि६ज(जि)ना ७बीज-८कुष्ठबुद्धि-९पदानुगाः॥२॥
संभिन्नश्रोतसः(१०) ११क्षीर-१२मध्वाश्रवा-१३मृताश्रवाः।
१४अक्षीण-१५जल्ल-१६खेला-१७ऽऽम-१८विप्रुट्-१९सर्वाभिमौषधि॥३॥
वैक्रियाः२० सर्वलब्धिश्च२१ ऋजोश्च२२ २३विपुलान्मति।
२४जङ्घा-२५विद्या-२६प्रज्ञामुनि-२७विद्यासिद्ध-२८नभोगमा.॥४॥
२९तप्त-३०शीत-३१तेजोलेश्याः३२दृष्ट्याशीर्विष३३-३४वाग्विषाः।
३५चारणास्तु ३६महास्वप्नाः ३७तैजसाऽग्निनिसर्गिणः॥५॥
३८वाद्यष्टाङ्गनिमित्तज्ञाः३९ प्रतिमाप्रतिपन्नका.४०।
४१जिनकल्पप्रतिपन्ना ४२अणिमाद्यष्टसिद्धयः॥६॥
४३-४४-४५केवलित्रितयं ४६चोग्रतपोदीप्ततपस्विन'४७
४८चतुर्दश ४९[दश?]पूर्वविद ५०एकादशाङ्गवित्॥७॥
महाराज१-महाश्रेष्ठि२-चक्रभृत्त्रितयं३-४-५ बलः६।
षडेता लब्धयः कर्मभवा न ध्यानजाः स्फुटम्॥८॥

एकैकलब्धिभाजः स्युर्विद्याविंशतिसिद्धयः ।
विद्यासहस्रमित्येतत्पञ्चाशल्लब्धिगं मतम् ॥ ९ ॥
आद्यपीठे इदं ब्राह्म्यध्यक्षं बाहुबलेः पुरः ।
आख्यन्नाभिभवः पीठस्यास्य ब्राह्म्यधिदेवताः ॥ १० ॥
तथा मन्त्रसहस्रं च मन्त्रराजान्तरानुगम् ।
विद्यासमसाधनामन्त्रः पाठसिद्धोऽत्र लक्षणम् ॥ ११ ॥
लब्धे स्तुतिपदैकत्वमथैषां कार्यकृत्क्रमः ।
सप्रणव-नमः पूर्वमिष्टदा सर्वलब्धयः ॥ १२ ॥
श्रीमदञ्चलगच्छेशाः श्रीमेरुतुङ्गसूरयः ।
आलोक्यानेकसूरीन्द्रमुख्यमन्त्रोपयोगिनः ॥ १३ ॥
ग्रन्थान् गच्छोपयोगार्थं सारोद्धारं व्यधुः स्वयम् ।
श्लोकाः पञ्चाशतान्यत्राष्टापञ्चाशच्च निश्चिताः ॥ १४ ॥

इति श्रीविधिपक्षमुख्याभिधानश्रीमदञ्चलगच्छेश-श्रीमेरुतुङ्गसूरिलिखितः ॥
श्रीअञ्चलगच्छश्रीसूरिमुख्यमन्त्रकल्पः ॥ ग्रन्थाग्रम् ५५८ ॥

श्रीदेवाचार्यगच्छीय - अज्ञातकर्तृकं

# दुर्गपदविवरणम् ॥

इमस्स सूरिमतकप्पस्स दुग्गपयविवरणं भणइ—

पय एरिस न सुय गुरुवयणाओ न हु दिट्ठ कप्पए वयणे विउले।
उवएसा उवलद्ध ज तं विवरेमि इह पयड ॥ १ ॥

वद्दणय दाऊण गीयत्थाण समत्त(त्थ)सूरीणं।
ते विन्नवेमि पयओ सूरिवरा मह इम सुणह ॥ २ ॥

तुम्हाण जइ चित्ते खुत्ती सघडइ मज्झ वयणस्स।
तो आयरतु एय मह नो मिच्छुक्कडमिमस्स ॥ ३ ॥

चतुःपीठस्वामी मेरुरूपो महामन्त्रराज इति पूर्वनिश्चय। पीठनामानि—प्रथम विद्यापीठम्। द्वितीय महाविद्यापीठम्। तृतीय उपविद्यापीठम्। चतुर्थं मन्त्रपीठम्। पीठ किं ध्येयरूप समवाय। स च ईदृश –जिन-अवधि-परम-अनन्तावधिप्रमुख, नमो जिणाणमित्यादिपद रूपोद्वात्रिंशदष्टादश-द्वादश-त्रयोदश-चतुर्विंशतिसख्य 'पसिज्झउ स्वाहा' एतदन्त आद्य पीठमिति। इद च अष्टाभिर्विद्याभिर्भव्यसत्त्वोपकारिणीभिर्गर्भितम्। ताश्चेमा – सरस्वती १, रोगापहारिणी २, विषापहारिणी ३, बन्धमोक्षणी ४, आराधकश्रीसपादिनी ५, परविद्याच्छे दिनी ६, दोषनिर्नाशिनी ७, अशिवोपशमनी ८, या या विद्या प्रयुञ्जामि मम सा प्रसिध्यतु भव्यसत्त्वाराधकविषये अय भावार्थ। जात्यैकवचनम्। आसा पदविभाग। प्रणवनमोयुक्तानि पदानि सर्वाणि इष्ट कार्यं जनयन्ति न प्रणव विना। नमो इति पद मोक्षबीजम्, निर्बीज ध्यानम्। चउद्दसपुव्वीण पयाणुसारीण एगारसगीण उज्जुमईण विउलमईण एएसिमित्यादि सारस्सय मे पसिज्झउ स्वाहा। अनया रीत्या समस्तमिष्ट कार्यमुच्चारणीयम् ॥ १

आमोसहिलद्धीण विप्पोसहिलद्धीण खेलोसहिलद्धीण जल्लोसहिलद्धीण सव्वोसहिलद्धीण भव्याना कुष्टादिमहारोगे उपस्थिते अनया शरीर स्पृश्यते। ताम्बूल कलापानीयमभिमन्त्र्य दीयते। इमा श्रीखण्डेनालिख्य सुरभिद्रव्यै पूजयित्वा कास्यपात्रे दुग्धेन प्रक्षाल्य पान्य'ध्य,ते। एतान्यक्षराणि आराधकोपरि दुग्धममृत वा वर्षन्तीति ध्यान महारोगे नान्यत्र रोगहरी ॥ २

आसीविसलद्धीणं खीरासवलद्धीणं महुयासवलद्धीणं अमियासवलद्धीणं एषा विषापहारिणी, अनया शरीरस्पर्शादिः, पूर्वरीत्या पूर्वोक्तध्यानम् ॥ ३

जिन-अवधि-परमावधि-अनन्तावधिकेवलित्रयम् । एतानि बन्धमोक्षणी । अत्र पूर्वरीत्या ध्यानं स्पर्शनादि । एतेषां श्रीखण्डलिखितानामधोभागे बद्धनामालिख्य निरन्तरं पूजा ध्यानं च कार्यम् । महतां बन्धमोक्षे नान्यत्र ॥ ४

बीयबुद्धीणं कुट्ठबुद्धीणं संभिन्नसोयाणं अक्खीणमहाणसलद्धीणं सव्वलद्धीणं एतानि श्रीसंपादिन्याम् । ध्यानं पूर्वरीत्या निरन्तरम् । महतां सुस्थाननिवेशितश्रीणामलाभोपद्रवे प्रयोजनीयम् ॥ ५

उग्गतवचरणचारीणं दित्ततवाणं पडिमापडिवन्नाणं एतानि परविद्याच्छेदिन्याम्, ध्यानं वज्रपञ्जरमध्यस्थोऽहम् ॥ ६

जंघाविज्जाचारणाणं वेउव्वियइड्ढिपत्ताणं आगासगामीणं एतानि दोषनिर्नाशिन्यां ध्यानम्, सुरासुरपरिष्कृतः । सर्वव्यापी सर्वदिग्गामी अहम् । एतेषु ध्यायमानेषु क्षुद्रदोषः समीपस्थो न भवति । महतां महादोषे प्रयोजनीयम् ॥ ७

मणपज्जवा(व)नाणीणं सीयलेसाणं आसीविसदिट्ठीविसचारणमहासमणभावणाणं तेयग्गिनिसग्गाणं नमोयुक्तसविशेषणप्रत्येकप्रातिहार्यस्य पदानि सप्रणवनमोयुक्तद्वात्रिंशत्संख्यस्तुतिपदानि अशिवोपशमिन्याम् ॥ ८

श्रीखण्डविलिप्तकांस्यपात्रे आलिखितसमवसरणे 'ॐ अर्हं श्रीयुगादिनाथाय स्वाहा' मध्ये इत्यालिखेत् । तदधोभागे आर्त्तस्य नाम । ततः पूर्वस्याम् 'विनीतायां राज्यं करोति' इत्यालेख्यम् । उत्तरस्याम् 'पुत्राणां राज्यं ददाति, व्रतं गृह्णाति, इक्षुरसेन श्रेयांसः प्रीणयति' इत्यादि लिखेत् । दक्षिणस्यां 'मौनी विहरति' । पश्चिमायाम् 'उत्पन्नकेवलो भव्यान् प्रबोधयति' ततो निखिलमन्त्रस्य करेणाष्टोत्तरं शतं जापः । सुरभिद्रव्यैः सितकुसुमैः पूजा कार्या । पूर्वतःततो 'भक्तामर'स्तवेन स्तवनीयः । ततश्चैत्यवन्दनां विधाय शान्तिं भणित्वा श्रीखण्डसंपृक्तजलेनाष्टोत्तरकलशशतेन स्नात्रं क्रियते । तेन स्नात्रेणार्त्तोऽभिषिच्यते । यन्मण्डले लिखितं तदेव ध्यानम् । यद्वा युगादिनाथजन्मकल्याणकं यादृग्रीत्या कल्पे । एतद्वादे विवादे रणे राजकुले राज्ञि प्रत्यनीके नित्योपद्रवे विघटिते कार्ये महति रोगे चिरदोषग्रस्तेऽन्यस्मिन् विषमापत्स्थाने महतां सम्यक्त्वशालिनां स्थिरधर्मणामाराधितरत्नत्रयाणां पदस्थानां प्रयोजनीयं नान्येषाम् । अथवा 'यैः शान्तरागरुचिभिः' इत्यादिको 'ज्ञानं यथा त्वयि विभाति कृता०' एतदन्तः स्तवो नित्यं भणनीयः । सर्वेषामात्मनः सदा शान्तिकम् । अयमेव श्रीपुण्डरीकादेशोऽतिस्पष्टः । गणधरविद्यागर्भितं वृत्ताष्टकमिदं प्रातरेव भणनीयम्, नान्यवेलायाम् ॥ अतः कारणात् सर्वकार्यप्रसाधिकाः ॥

इति प्रथमपीठविवरणम् ॥

कल्पेऽप्युक्तम्—

प्रणवनमोयुक्तबाहुबलेर्विशेषणनवपदयुक्तस्य सिध्यता मम भगवती मही(ह)ती महाविद्या स्वाहा। अत कारणान्महाविद्यापीठं बाहुबलिभाषितं तीर्थकृत्कर्मनिर्मितौ दीक्षानन्तरं नभवति। पूर्वं ज्ञानचतुष्टय नवधा बाहुबलीरूपस्तीर्थकृत् ते च इमे नवप्रकारा – प्रज्ञाश्रमणत्वं मतिज्ञानरूपम्। महाप्रज्ञाश्रमणत्वं समस्तश्रुतज्ञानरूपम्। शतयलवीर्यत्व महाबलत्वं अवधिज्ञानरूपम्। योधपराक्रमत्व सहस्रमल्लत्वं महाबाहुत्वं महाबलविक्रमत्वं मन पर्यवरूपम्। तत प्रणवयुक्तवग्गुचतुर्द्धा तत्पट्पदानि गुरुगम्यानि। एवं दश। तत पञ्च महुमहुरे स्वाहापर्यन्त केवलज्ञानरूपम। ईदृशं महापीठम्। एता महाविद्याः। अस्य मध्ये आदेशविद्या जया विजया अपराजिता। महापन्न(ण्ह)समणस्स एतदन्ता आदेशविद्या। शतबलत्वादीनि षडविशेषणपदानि महती महाविद्या स्वाहान्तानि। जया-विजया-अपराजितायामादेशो भवत्याराधकस्य। आदेशविद्याप्रयुञ्जन भव्याना स्थिरधर्माणा भवति नान्येषाम्। अथवा उदयप्राप्ताना तीर्थश्रुतभयप्रत्यनीकाना भयङ्करादेशक (क)री। जय स्वदेशे, विजय परदेशे। अपराजितत्व तीर्थादिप्रत्यनीकमध्ये महापीठस्मरणेन पूर्वोदिष्टसारस्वतादिसाधनाया जयविजया-ऽपराजितत्वं भवति। वग्गु इत्यादि महुमहुरे किपिसिद्धि आरि कालि स्वाहा। एतानि केवलज्ञानमयपदानि। केवलमस्या स्मरणेन त्रिभुवनेऽप्यप्रतिहतशासनो भवति। नमोयुक्तभगवतो बाहुबलेरित्यादिविशेषपदनवक वग्गु इत्यादि पञ्चदश किपिसिद्धिआरि कालिस्वाहान्तं महाविद्यापीठम।

इति द्वितीयपीठविवरणम् ॥

अथोपविद्यापीठम्—

एतेनैनदेव भवति, सारस्वतादि आदिष्ट कार्यं प्रयुक्तं सविलम्बं सिध्यति यदा, तदा तदर्थं विचिन्त्य स्मरणीय शीघ्र सिध्यति। शिष्यपरम्परया या काचिद् गुरूणा सिद्धिरस्ति साऽल्प–बहुत्वाद्युच्छित्तिर्भवति। शापानुग्रहसामर्थ्यं च। अत उपविद्यापीठमुक्तम्। इरियाए इत्यादि महाकालिस्वाहान्तम्। अस्य विवरणमिदम् ॥३॥

[ इति तृतीयपीठविवरणम् ] ॥३॥

अथ मन्त्रपीठम्—

पीठत्रये यत् कार्यं पूर्वोक्त तत् सर्वमविलम्बमप्रतिहत सिध्यति। नवर विद्या ससाधना। [1]असाधनो मन्त्र। अननैनैव पूर्वोक्त सर्वं सिध्यति। विद्यासाधना कल्पे उक्ता। अतो

[1] श्रीदेवता च विद्याऽत पीठत्रये सरस्वती त्रिभुवनस्वामिनी श्रिया देव्य। मन्त्रपीठे च गणिपिटक पुरुष देवतासमन्त्रस्य॥

मन्त्रपीठं भगवतामेकोनविंशत्यतिशयाष्टप्रातिहार्यरूपम् ॥

इति चतुर्थपीठविवरणम् ॥४॥

अनन्तज्ञान–अनन्तदर्शन–अनन्तवीर्य–अनन्तानन्दमयं पीठचतुष्टयमेवास्ति । ध्यातुर्नित्यस्मरणेऽनन्तचतुष्टयसिद्धिः संपद्यते । ततोऽनन्तचतुष्टयगर्भितश्चतुष्पीठस्वामी सर्वकर्मक्षयकारी मोक्षरूपो मन्त्रराजः सपञ्चसंख्यपदः, न षट्संख्यः, न सप्तसंख्यः । षट्संख्यः सप्तसंख्यो यो दृश्यते स कथं किमध्ये इगि संभवति ? हिमध्ये त्रिरिति नवमो नास्ति । गौतमवाचनायं(यां) यन्मन्त्रराजे एकादशपदानि, तदसत्यम् । ग्रन्थन–संदर्भादीनि अक्षराणि सन्ति, तदेवासत्यम् । कुत इदम् । यावन्नवगुणस्थानप्राप्तिस्तावत्कोट्यंशो मन्त्रः । ततो नवपदानि संभवन्ति । ग्रन्थनादीनि लौकिकमिथ्यात्विके मन्त्र–व्याकरणेऽर्हन्ति । अतो नैवान्यत्र । यत् कल्पे उक्तानि तत् शिष्यसंमोहार्थं न श्रद्धेयमेव उन्मत्तवचनवत् । तर्हि कोट्यंशो मन्त्रः कथम् ? केवलज्ञानेन द्रव्याद्यनन्तं यद् वीक्ष्यते तस्य तत् कोट्यंशं कोटिभागमवलोकयत्यस्य ध्याता । अतः कोट्यंशोऽयम् ? सांप्रतं सिद्धौ सत्यामष्टोत्तरशतांशं यावदवलोकयति प्रमादबाहुल्यात् । अंशानयनं कल्पोक्तम् । अतः पीठोद्धारेऽष्टोत्तरपदशतानि संभवन्ति । ऊर्ध्वं न संभवन्ति । अष्टोत्तरशतपदमध्याद् यावन्ति तावन्ति भवन्ति तर्हि पञ्चपदानि कथम् ? ज्ञानं दर्शनं चारित्रं जीवः । गतिश्च प्रत्येकं पञ्चधा । रत्नत्रयरूपो मोक्षदायी । अज्ञानकोपाद्यष्टादशदोषापहारी प्रत्यक्षः सर्वज्ञरूपो मन्त्रराजः । ईदृशो व्यावर्णितः । अतः पञ्चपदानि संभवन्ति । शेषा मन्त्रशुद्धिः कल्पोक्ता शुद्धा । अरिहंतत्तणे सोलसंसा । ते के सत्कर्मतीर्थकरनामलक्षणं तस्यांशाः, तैर्निर्मितानि तन्मयानि मन्त्रराजपदानि, शेषाणि पदानि वीतरागाश्रितानि, यावत्कोट्यंशस्तावदणिमादयो महासिद्धयो मन्त्रराजध्यानफलमैहिकम् ।

अथ पूजाकाले प्रस्थानम्––तत् किं प्रस्थानम् ? ध्येयस्थापना ध्येयपङ्क्तिरित्यर्थः । पञ्चप्रस्थानानि नानारूपाणि ध्येयपदविभागेन प्रस्थानालिखने षट्पदो मन्त्रराजः सप्तपदो वा शेषाणि फङ्कानि मन्त्रराजपदापेक्षया । मन्त्रराजस्तु षट्कोणे ध्येयानि पञ्चैव । तदपेक्षया मन्त्रपीठमुपविद्यापीठम् । विद्यादेवताश्चेमास्ताः–किपिसिहिआरि कालिपदोपविद्याकार्यं यदा च महाविद्याकार्यं तदा एकस्याः प्रान्ते स्वाहा, अन्यस्याः प्रारम्भे प्रणवश्चोच्चारणीयः । प्रभवादारभ्य श्रीवज्रस्वामिनं यावत् तावद्ज्ञानचतुष्टयं कोट्यंशः । ततो व्यवच्छिन्नः सांप्रतमष्टोत्तरशतांशादूर्ध्वं नावलोकयति, तदेव कृतसाधनायां महानैष्ठिकेन श्रीवृषभ-चन्द्रप्रभ-वर्द्धमानकल्याणके साधनारम्भः । कुतो हेतोः ? । श्रीवृषभादारभ्य श्रीपुण्डरीकादीनां चन्द्रप्रभं यावत् तावदेकरूपो न्यासः । ततो विभिन्नरूपश्चन्द्रप्रभाद् यावद् वीरं वीरस्य न्यासो द्वात्रिंशत्श्लोकप्रमाणः । अत इदमुक्तं दुःप्रसहसूरिर्मन्त्रराजपदत्रयं पठिष्यति, तदसत्यम्, सोऽपि

पञ्चैव। अन्यथा ध्रुवाशा न सम्भवन्ति। कथं स्फूर्तिविच्छेदोऽस्य ? अज्ञानतो विक्रियाकरणतो-ऽवलेपतोऽपह्नुतजिनवचनसद्गुर्वाचरणविरोधतश्च अज्ञानं विक्रियाकरणमवलेपमनिष्टाचरणं विहाय त्रिशुद्ध्या सप्रणव-ह्रीँ-अर्हंयुक्तमन्त्रराजपञ्चपदानि चतुष्पीठस्वामिने नम इत्यन्त-पुरस्कृतानि लक्षत्रयं जपति, स तृतीयभवे सिध्यति।

संप्रति मन्त्रराजध्यानफलम्—अतिव्यस्तोऽयं पुण्डरीकादेश अभीष्टगुरुमुखेन संजात ।अस्य द्वौ न्यासौ। आद्यो युगादिनाथसंबुद्धो विद्यासहस्राधिष्ठितो मन्त्रसहस्रगर्भित. । यस्य कस्यापि महानैष्ठिकस्य सूरेर्मेरुरूपो मन्त्रराज सिध्यति, तस्य विद्यामन्त्रयो सहस्र-प्रसङ्गेन सिध्यति । यतश्चतुष्पीठस्वामी मन्त्रराज स्वाहान्त । पूर्वं विद्यान्यासो दिग्मात्रेणोच्यते । श्रीआदिनाथेन ब्राह्मीप्रत्यक्ष लोकोत्तरमहाचारित्रिणं(ण) संबन्धि विद्यासहस्रं श्रीबाहुबलिन प्रकटितं प्रज्ञप्तं च । तेन ब्राह्मी अधिष्ठात्री आद्यपीठस्य। तत्र प्रथमपीठे विद्यासहस्रन्यास । पञ्चाशल्लब्धयो यथाख्यातचारित्रेण । चारित्रिणा पञ्चाशल्लब्धिमता ध्यानेन विद्यासहस्रं सिध्यति। एकैकस्य लब्धिमतो ध्याने मन्त्रविद्याविंशति-सिद्धि । प्रणवनमो [१]जिन [२]अवधि-[३]परमावधि [४]अनन्त-[५]अनन्तानन्त [६]सर्वावधि-[७]बीज-[८]कोट्टबुद्धि-[९]पदानुसारि-[१०]संभिन्न-[११]खीर-[१२]महुया-[१३]अमियासव [१४]अक्खीण-[१५]आमो-[१६]विप्पो-[१७]खेल-[१८]जल्ल-[१९]सव्वोसहि-[२०]वेउव्विय-[२१]मव्वलद्धि-[२२]उज्जु-[२३]-विउलमइ-[२४]जंघा-[२५]विद्या-[२६]पण्हसमण-[२७]विज्जासिद्ध-[२८]आगासगामि-[२९]तत्तलेस-[३०]सीयललेस-[३१]तेउलेस-[३२]वयणविस-[३३]आसीविस-[३४]दिट्ठीविस-[३५]चारण-[३६]महासुमिण-[३७]तेयग्गि-निसग्ग-[३८]वाई-[३९]अट्ठंगनिमित्त-[४०]पडिमापडिवन्न-[४१]जिणकप्पपवन्न-[४२]अणिमाइसिद्धि-[४३]सामन्न-[४४]भवत्थ-[४५]अभवत्थकेवली-[४६]उग्गतव-[४७]दित्ततव-[४८]चउद्दसपुव्वी [४९]दसपुव्वी-[५०]एगारसंगी ॥ [१]चक्कि [२]केसव-[३]पडिकेसव-[४]बल-[५]महामण्डली-[६]महाश्रेष्ठिन् ध्यानमार्गे एता लब्धय । "ॐ ह्रँ नमो जिणाण, ॐ जा जा ऐं क्ष्रीँ श्रीँ क्रुँ स्रूँ ईँ ह्रौँ ह्रौँ ह्र स्वाहा"। सरस्वती विद्या। अनया रीत्या शेषेसु चतुर्षु पदेषु एकैक कूटाक्षर योज्यमावलीक्रमेण तद्यथा— ड्म्ल्व्यूँ ह्म्ल्व्यूँ फ्ल्व्यूँ म्म्ल्व्यूँ स्म्ल्व्यूँ क्ष्म्ल्व्यूँ रम्ल्व्यूँ ल्म्ल्व्यूँ घ्म्ल्व्यूँ श्म्ल्व्यूँ व्म्ल्व्यूँ न्म्ल्व्यूँ ॥ द्वयो कूटाक्षर नास्ति।

आद्यवत् सर्वं भणनीयम्। एतेन कारणेन विद्यापीठम्। एतदन्ते बाहुबलिन्यास । सप्तपूर्वोक्त-विशेषपद । यतो विद्यासहस्रसर्वलब्धिसिद्धो भगवान् ततस्तन्न्यास । अतो महाविद्या । एत-त्प्रभावेण सर्वासा सिद्धि । ततस्तीर्थकृद्देशना पञ्चत्रिंशद्वचनातिशयरूपवागुरी(गु इरि)याए इत्यादि महुमहुरे एतदन्त बाहुबलिभाषितपदाष्टकन्यास । अत्र पूर्वं तीर्थकृत्स्वरूपोऽष्टोत्तरशत-पदन्यास । एतस्माच्चन्द्रसेनसिद्धवाचकेन चतुर्विंशतितीर्थंकरविद्याकल्प कृतो विभिन्न । पश्चाद् गौतमेन पदाष्टक न्यस्तमत्र ॥ अस्य ज्ञापकम्—

'समणे वि य सौमणसे महुमहुरे जिणवरे नमंसामि' श्रीमानदेवस्तवोऽयम् ॥

एतस्माद् बाहुबलीकुमारकाले त्रिभुवनस्वामिनी देवी उपासिका। गङ्गातटे महासामायिकप्रपन्ने श्रीदेवी। तेन महाविद्यापीठस्य द्वे अधिष्ठातृदेवते। ततस्तीर्थकृद्-गणधर-लब्धिमदुपासिका तीर्थसमुत्पत्तौ एकावतारतीर्थकृन्नामकर्मांशोदयजातमहाप्रभावापन्नभूतपूर्वलब्धिपूर्वपरिपालितसाल्पातिचारोग्रतपसां देवीनां न्यासः। ताश्च मन्त्रराजपदसंख्याः स्युरतोऽस्य विवरणं पूर्वम्। सोऽर्हन्तरूपः। तत् पञ्चधा सप्तधा स्यात्। [1]इकि भवपरावर्त्तनरूपं भवस्थं वा। भवोऽप्येकेन्द्रियादिको न परोपतापकश्चिन्तामणि-कल्पद्रुमादिको न विकलेन्द्रियत्वं भवे भवेऽत्यद्भुतकरणत्वं निर्वाहकत्वं च लोकोत्तराणां लोकानां च। गिरीति राज्यावस्थारूपं जनसमृद्धिकरणसामर्थ(र्थ्यम्)। पिरीति दीक्षावस्थारूपं परमप्रीतिसंपादकत्वं स्थावर-जङ्गमानाम्। सिरीति कैवल्यरूपं सर्वज्ञता च। हिरीति महापूजासंवद्धं त्रिजगत्यपि अप्रतिहतशासनत्वम्। आइरीति संघरूपं मोक्षरूपं च। एतत्पदसंख्यामन्त्रपीठम्।

[न्यासविधिः—]

अत्र देवानां देवेन्द्राणां च न्यासः—इरि इरीति किरि किरीति कल्पेन्द्रन्यासः। गिरि गिरीति भवनपतीन्द्राणाम्। पिरि पिरीति व्यन्तरेन्द्राणाम्। सिरि सिरीति ज्योतिषेन्द्राणाम्। हिरि हिरीति अमलस्वामि-गणिपिटकप्रमुखेन्द्रसामानिकानाम्। आइरीति लौकान्तिकानाम्। कालः सातिशयक्रियानिष्पादनलक्षणः। सोऽस्तीत्येषां तीर्थकृतां पञ्चकल्याणकैकोना(१९)तिशयप्रातिहार्योपासना स्वर्णवृष्टिसमवसरणरचनेत्येवमादिक्रिया। आदिशब्दाद् गणधरदेवानामभिषेकाप्रतिहतशासनं अविलम्बेन तीर्थप्रवृत्तिरव्यवच्छिन्नपञ्चाचारपालकत्वं संघश्रीसंपादकत्वं धर्ममर्यादामिथ्यात्वानभिभूतत्वं गुरुत्वसंपत्तिभक्तोपधिप्राप्तिर्दुष्टराजदैवतोपसर्गस्खलनं वादिनिराकरणत्वं दुर्भिक्षकान्तारोल्लङ्घनत्वं सिद्धान्तार्थवेदनं शापानुग्रहसामर्थ्यं गुप्तपोनिर्वाहस्तीर्थश्रुतिशिष्यस्थापना। एतद्व्यवस्था एतत् सर्वं कल्याणक्रियापूर्वोक्तेन्द्रदेवानाम्। मन्त्रपीठ[ठे][2]पूर्वस्मिन् देवीनां न्यासः। आसां कार्यमिन्द्रदेवसमं नाम-विशेषश्चायम्। इरि किरि चक्रेश्वरीन्यासः। गिरीति दिक्कुमारीणाम्। पिरीति यत्र तीर्थं तद्देव्याः। सिरि हिरीति नन्दा-भद्रा-जया-विजया-अपराजिताचतुर्विंशतिदेवी गौरी-गान्धारी-रोहिणी-प्रज्ञप्तीनां सर्वासाम्। आइरीति आत्मदेव्याः। कालिकालीति तीर्थंकर-गणधरनिर्वृतिगम-

---

१ तथा चाहुः—आद्ये द्वे भवरूपसौख्यजनने राज्यादि तार्तीयके तुर्ये दीक्षितभावरूपमतुलं कैवल्यरूपं परम्। पूजाकारि महत्त्वभावकलितं षष्ठं तथाऽन्त्यं पदं श्रीसंघो भगवान् महोदयपदं श्रीमन्त्रराजेऽस्त्यदः ॥१॥

२ उपविद्यायाम्।

नानन्तरं संदेहे जाते संघस्य तद्व्यवच्छेदलक्षणः काल-मोऽस्यामीति। कालीनि ज्ञानाभावे महासाधु-श्रावकपरलोकगतिकथनलक्षणः।

तत उपविद्या 'इरियाए' इत्यादि आए उत्तरकाले तीर्थान्तराललक्षणे आयलाभे रत्नत्रयरूपे तीर्थान्तराले सूरीणां लब्धिमतां तीर्थकृन्न्यासः। अर्हन्तस्त्रिधा। अर्हत्वमंभवन्यासे यथा मरीचिना युगादिनाथः श्रेयांसो वन्दितो राज्यदीक्षाऽवस्थायाम्। किरि सर्वद्रव्यन्यासः। गिरि सर्वगुणन्यासः। पिरि पर्यायन्यासः। सिरि उत्पादुत्पत्तिन्यासः। हिरि एषां ध्रौव्यन्यासः। आयरि एषां निगमः। पूर्वकर्मकारिदेव-देवीनां पुनः पुनरुत्पत्तेरव्यवच्छिन्नाऽतिशयानां न्यासः। अत्र स्तवो ज्ञापकः।

किरियाए हिरियाए असंगए तिविहकालियं विरए।

सुहसाहए य तह मुत्तिसाहए साहुणो वंदे ॥

अत्रापि विशेषकल्याणक्रियाकारिणीनां पूर्वदेवीसंबद्धमहत्तराणामल्पसंसारिणीनां केवलं सूरि-साधूपासिकानां देवीनां न्यासः। इरीति श्रीशान्तिदेव्यः। किरीति अभयादेव्यः। गिरीति निर्वृतिदेव्यः। पिरीति शान्तिदेव्यः। सिरिहिरीति श्री-ह्री-धृति-कीर्त्ति-बुद्धि-लक्ष्मी-जृम्भिनी-मोहिनीनाम्। आयरीति बलादेव्यः। तीर्थान्तराले सूरि-साधूनां कृतकार्योन्मार्गाणां स्वस्वकर्म कुरुते। तेन नन्द्यादि(ष)ष्टिकस्याः कृतोत्सर्गः सर्वासां स्यात्। आसां कर्मेदं यथाक्रमेण चैत्य-श्रुत-तपः-संघमहत्त्वस्थापनम्, दुष्टदेवीनिराकरणम्, पर्वतपत्तनादिस्थाने चैत्यागेपणम्, रक्षणम्, अष्टाङ्गनिमित्तप्रकाशनम्, सर्वव्याध(धि)विनाशनम्, श्री-ह्रींनामसादृश्यम्, मिथ्यात्व-देवताधिष्ठितचैत्य-श्रुत-तपः-संघसमुद्धरणम्। महाकाले सिद्धसेनदिवाकरवत्। बोटिकाधिष्ठित-रैवतवत्। न्या(न)यचक्रवाद्यन्ये धर्मकीर्त्तिबौद्धाधिष्ठितवत्। अनशने उपोषितरात्रिभोजना-दर्शनम्, चतुर्वर्णश्रीसंघस्य शाकिन्यादिक्षुद्रोपद्रवनाशनतायोगिशयगण्डासंक्रमकरणम्। आसां मन्त्राक्षरे ॐ ह्रीं ॥ अतो वक्ष्यार्थे ध्येयोपविद्याकल्पोक्तिः।

[इति न्यासविधिः।]

अथाचार्यमन्त्रसिद्धिः—मन्त्रराजो भगवानर्हत्त्वरूपः। कथं सूरिमन्त्रो भण्यते ? सत्यम्, गुरु-शिष्ययोर्धर्म-धर्मिणोश्चाभेदः। गुरुरर्हन्, तेनार्हत्त्वेनानुशिष्टाः शिष्या गणभृतः। अर्हत्त्वं यथावस्थितं तेऽपि जानन्ति, नान्ये। यतश्चतुरनुयोगिनस्ते तीर्थकृत्प्रश्नोत्पाद-निगम-ध्रौव्य-लक्षणासुद्व्यवच्छेदकाः स्युः। अर्हत्त्वमपि गणभृत्त्वमपि आत्मरूपम्। ततस्तद्द्वयं ते द्वयेऽपि जानन्ति। यतः षोडशांशास्तीर्थकृतस्त्रयोदशांशा गणभृतः द्वयोरियदन्तरं षोडश त्रयोदशांशा स्कन्धरूपपुद्गलास्तीर्थकरनामकर्मसंबद्धोदयेनार्हत्त्वं गणभृत्त्वं च सर्वज्ञतातुल्या सिद्धिश्च। परं निश्चयतोऽर्हत्त्वे गणभृत्त्वे व्यवहारः। सोऽत्यन्तं बलवानर्हतामपि। गणधरकृतमर्हन्तोऽपि न

याधन्ते । आइरीति संघरूपं मोक्षरूपमर्ह-त्त्वमुक्तम् । संघाद्यो गणभृत् । तस्मादाचार्यमन्त्रः । अतोऽर्ह-त्त्वसिद्धिर्व्याख्यायते पूर्वम् । पश्चादाचार्यपरम्परा । अस्य चतस्रो वाचना । महती बृहती उक्ता न्यासी । गणभृतामाद्यतीर्थे स्वयंसिद्धो मन्त्रस्तेन महती बहुसिद्धिः । अनन्तरं या पश्चाज्जायते पूर्णा सा बृहती । गौतमी तु उक्ता । चतुर्दशपूर्विणां यावत् सातिशयः कालः । न्यासी मानदेवीलब्धिपदानि त्रीणि चत्वारि पञ्चपदानि । एकस्मिन् पदे न्यस्यन्ते सा न्यासी । यदा पदानुसारिणीं विना न पूर्वाणि चउदसपुव्वीणं । अनया रीत्या पञ्चाशत् । यथा यथाऽतिशयहानिस्तथा तथा पदहानिः । अत्र स्तवो ज्ञापकः—

"आयरियमेरुपयमवि साहंते सूरिणो वंदे"

तत् कथं लब्धिमन्तः साधवो ध्यायन्ते । पूर्वं तद्ध्याने सारस्वतादिसिद्धिः । अर्ह-त्त्वं गणभृ-त्त्वं यथाख्यातचारित्रेण, क्षायिकज्ञान-दर्शनेन लब्धीरनुभूय पूर्वभवे पश्चादर्ह-त्त्वं गणभृ-त्त्वं स्याद्, अतोऽपि साधवो ध्येयाः । सिद्धत्वं तेषामेव । अर्ह-त्त्वगणभृ-त्वा(-त्त्व)साधनाद्वितीयम् । अत्र स्तवो ज्ञापकः—

इयमंतपयसमेया थुणिया सिरिमाणदेवसूरीहिं ।
जिणसूरिसाहुणे सइ दिंतु थुणंताण सिद्धिसुहं ॥

यस्यामवस्थायां यो ध्येयो ध्यायते तत् फलम् [इति] तात्पर्यार्थः ॥ छ ॥

[इत्याचार्यमन्त्रसिद्धिः॥]

अथात्मगुह्यम्—

भविष्या वर्त्तमाना ये सूरयः स्व-परगच्छगाः ।
पतित्वापादयोस्तेषां तान् विज्ञपयाम्यदः ॥ १
सर्वसावद्यसेव्यस्मि तादृग्विद्यागुरुर्न मे ।
तादृग्मन्त्रगुरुर्नाभूत् हतो लिङ्गोपजीवकः ॥ २
एवंविधोऽपि जिज्ञासुर्जातो भगवदागमे ।
नामाचार्यपदप्राप्तः किञ्चिज्ज्ञः कर्मयोगतः ॥ ३
आगामिबोधिलाभाय कदा शत्रुञ्जये गतः ।
दुःख-कर्म क्षपयितुमादिनाथं विवन्दिषुः ॥ ४
सिद्धिक्षेत्रे स्थितो ध्यायन् युगादिजिनपुङ्गवम् ।
मन्त्रस्वरूपजिज्ञासुस्ततो जातो ह्युपोषितः ॥ ५

चतुर्विंशाक्षरप्राप्तिर्जातेयं पञ्चमे दिने ।
तत ऊर्ध्वं कुर्वतो मे तत्राविर्भूतमीदृशम् ॥ ६
तत्र मश्नाक्षरं जातं प्रश्नाक्षरप्रमाणतः ।
ईदृशं गदितं सर्वं न वेद्मि किन्तु तत्त्वतः ॥ ७
मदीयं वितथं वाक्यं सत्यं वेत्ति न विद्यते ।
प्रायः प्रमादयुक्तानां दुःसमायामहं नृप ॥ ८
स्वरूपमस्य विज्ञाय क्रियतां यद् विरोचते ।
मिथ्या मे दुष्कृतं वाऽस्तु मा भूदाशातना कदा ॥ ९

यद्यसत्यं तदा सिद्धसमक्षं गीतार्थसमक्षमालोचना ॥ छ ॥

स्वाहाहोमस्मरणार्थम्–यदक्षमुष्टित्रयं तत् त्रिभुवनव्यवहाररूपम्, मुष्टिप्रायो जगद्व्यवहारः । जिनशासनस्याप्रस्तरिका होमकुण्डचिन्ता । वासक्षेपो होतव्यद्रव्याणि । पूर्वं जपो होमश्च नित्य साधनेत्याकूता(त) द्वादशकूटाक्षरस्थापना द्वादशारकालचक्ररूपो यतोऽअररूपो कालः । षष्ट्यक्षरमितं पलम् । षष्टिपलाः कला । कूटाक्षराणि न ध्याने, पूजायां स्थाप्यन्ते । तेन श्रीमानदेव द्वादशपदी स्तुतावेव मन्त्राक्षराणि । मन्त्रपीठ–मन्त्राक्षराणि कल्पोक्तानि । पञ्चभूतात्मिका क्षिप ॐ स्वाहा आत्मरक्षा । पञ्चशून्यात्मिका च ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः । अन्तरतत्त्वं न गुरोर्ज्ञातम् । स्वसंवेदनतो ज्ञातं कूटाक्षरवेदनं सद्गुरोः । शेषमादेशतः । पूर्वं शतत्रयश्लोकसंख्या । एवंविधो गौतमन्यासो द्वात्रिंशत्श्लोकप्रमाणः । अष्टोत्तरविद्याशतकलितः । साम्प्रतं विद्याष्टकगर्भितः । विद्यापीठं विद्या उपविद्यामन्त्रपीठं मन्त्रराजः । एतेषां व्यवहारमात्रतो न्यासः नतास्त्वित्थम् ।

गौतमस्वामिमन्त्रोऽयं सम्यगाराधितो नरैः ।
चिन्तामणिरिवाजस्रं चिन्तितार्थप्रसाधकः ॥ १
दारिद्र(द्रय)कन्दनाशाय विघ्नव्रातविनाशिने ।
नमोऽस्तु मन्त्रराजाय विश्वलक्ष्मीप्रदायिने ॥ २
या च लोके महासिद्धिर्या च लोकोत्तरं मता ।
सम्पद्यते स्फुटं सा सा मन्त्रराजस्तवस्मृतौ ॥ ३
अतीतानागता ये च ये जिनेन्द्राश्च सम्प्रति ।
ते सर्वे वन्दिता नित्यं मन्त्रराजस्तवस्मृतौ ॥ ४

गोतमेन कृतः पूर्वं तेन गौतम उच्यते ।
सुधर्मस्थापितस्तीर्थे सुधर्मा तेन संप्रति ॥ ५
यावत् त्वं वर्त्तसे नाथ! तावत् तीर्थकृदागमः ।
तावज्ज्ञानं सभेदं च तावत् तीर्थप्रवर्त्तना ॥ ६
सर्वदेवमयोऽसि त्वं पुरुषोत्तममयोऽसि च ।
तव त्रैलोक्यनाथत्वं मन्त्रराज! तव प्रभो! ॥ ७
ध्रुवं तीर्थकरोऽसि त्वं ध्रुवं गणधरोऽसि च ।
भवेऽत्र वर्त्तमानोऽपि स्वर्गो मोक्षोऽसि पुण्यदः ॥८

सिद्धाष्टकमिदं श्लोकद्वयं गुरुभिर्दत्तं श्लोकषट्कमादेशेन। किञ्चिज्ज्ञातं श्रीशङ्खेश्वरप्रभुश्रीपार्श्वनाथादेशेन, सर्वं प्रभूतं पुण्डरीकादेशेन। यद् गुरुणा दत्तं तत् तस्य प्रमाणम्। आत्मसंवेदनार्थं निगदितम् ॥

[इत्यात्मगुह्यम् ॥]

इतोऽनन्तरगणधरवलयमन्त्रः—प्रत्यन्तरे स च लघुपत्रेषु वाच्यः। वैखरी मध्यमा पश्यन्ती पराभाषाभेदाश्चत्वारोऽस्य। वैखरी स्पष्टोच्चारणम्। मध्यमा सर्ववर्णस्थानव्यापकत्वम्। पश्यन्ती अर्धदृष्टिः। परा ध्वनिवर्जितसर्ववर्णस्थानास्पर्शनम्। अनया रीत्योच्चारणीयः ॥ छ ॥

मन्त्रजातिश्चतुर्धा–आणव-कार्मज-प्रवर्त्तक-निवर्त्तकाः। आणवाः सत्कर्मबीजम्। कार्मजा सत्कर्मोदयः। प्रवर्त्तका सत्कर्मप्रवृत्तिः। निवर्त्तका मोक्षः। चतुर्जातीयो मन्त्रः यावन्मात्रः कर्मक्षयोपशमस्तावन्मात्रा सिद्धिः। अतश्चतुःपीठयुक्तो मन्त्रराजो [1]ध्येयः। ईदृशं एतत् सर्वं मयाऽऽदेशेन निगदितम्। यदि सत्यं तदाऽस्तु मे दुःकर्मक्षयाय भव्योपकाराय। अथासत्यं तदा मिथ्यादुष्कृतम्। न जातु प्रायश्चित्तमनन्तसंसारित्वं दुर्लभबोधिबीजत्वं यतो मयाऽशठेन रचितमिदम्। ईहा-समीहां विना श्रीपुण्डरीकादेशेन यदत्र मध्येऽस्ति तज्जातम्। परिभावयन्तु गीतार्थाः, मा कुप्यन्तु। अन्तःकरणशुद्ध्या चोक्तं शील-संयम-चारित्रविहीनोऽहम्। कथं संप्रीणितो भगवता, एतन्न ज्ञातं न ज्ञायते। पञ्चमोपवासेन समादिष्टमेतदवितथम् जैनो धर्मश्च विजयताम्।

श्रीदेवाचार्यगच्छसमुद्भूतसूरिशिष्यलवलवेन रचितं विद्याकल्पसंग्रहे दुर्गपदविवरणं समाप्तमिति ॥ ग्रन्थाग्रम् २३८ ॥

---

१ कर्मक्षयकारित्वात् ॥

[मन्त्राम्नायः]–

"ॐ ह्रां क्षां नमो अरिहंताणं। ॐ ह्रीं क्षीं नमो सिद्धाणं। ॐ ह्रूं क्षूं नमो आयरियाणं। ॐ ह्रौं क्षौं नमो उवज्झायाणं। ॐ ह्रः क्षः नमो लोए सव्वसाहूणं। इति महामन्त्राक्षरगर्भितं पञ्चपरमेष्ठि[नं]। आपदं हन हन, संपदं उपनय उपनय, शत्रुं स्तम्भय स्तम्भय स्वाहा"। १०८ वारस्मरणा। अथवा वार २१ शान्त्यर्थे श्वेतध्यानम्॥ १, वशार्थे रक्तध्यानम्॥ २, लक्ष्म्यर्थे पीतध्यानम्॥ ३, नीलध्याने विषं याति। मुक्त्यर्थे पञ्चवर्णम्॥

"ॐ वज्रगन्धारीमहाभैरवी हन हन, दह दह, पच पच, मथ मथ, सर्वभूतान् आकर्षय आकर्षय। सर्वशत्रून् वशं नय, सर्वदुष्टान् निवारय। सर्वजनप्रियो भवामीति ह्रां क्षां ह्रीं क्षीं ह्रूं फट फट् स्वाहा"। सर्वजनप्रियङ्करो मन्त्रोऽयं व्याख्याने स्मरणीयः। वार १०८॥

"ॐ नमो भगवते-पार्श्वनाथाय ह्रीं धरणेन्द्राय सप्तफणविभूषिताय सर्वज्वरं सर्ववातं सर्वद्रुतं सर्वदुष्टं सर्वविसं (षं) सव्वस्स रोगं नाशय त्रासय छिन्दय भिन्दय। यः यः रः रः हुं फट् स्वाहा" ॥ छ ॥

सर्वकर्मकरो मन्त्रः॥ १२, अनेन उञ्जकम्, कालापानीयं च क्रियते॥

"ॐ नमो भगवते देवश्रीपार्श्वनाथाय ह्रीँ धरणेन्द्र-पद्मावतीसहिताय अट्टे मट्टे दुष्ट-विघट्टे क्षुद्रान् स्तम्भय स्तम्भय, दुष्टान् निग्रह निग्रह, उपद्रवान् छिन्द छिन्द स्वाहा"। वार ७ अथवा २१ अथवा १०८ स्मरणीयन्ते॥

अज्ञातसूरिकृतः

# सूरिमन्त्रकल्पः

ॐ ह्रीँ नमो मन्त्रगुरुपादुकाभ्यः ॥

सिरिसूरिमंतपवरे जे सिद्धा सुयपवुड्ढिसंजणगा ।
तव्वयणसंगहो मे वण्णिजइ तप्पए नमिउं ॥१

१जिण-२ओही-३परमोहि-४अणंतोहि-५अणंताणंतोहिजिण ।
६केवलि-७भवत्थकेवलि ८अभवत्थि य केवलीणं च ॥ १ ॥
९उज्जुमई १०विउलमई ११वेउव्वियलद्धि-१२सव्वलद्धीणं ।
१३पण्हासमणाण तहा१४ जंघाचारणमुणीणं च ॥ २ ॥
१५विज्ञासिद्धाण तहा १६आगासगामीण तह य निच्चं पि ।
१७आमोसहि-१८विप्पोसहि-१९खेलोसहि-२०जल्लमोसहीणं च ॥ ३ ॥
२१सव्वोसहि-२२आसीविस-२३अट्टंगनिमित्तधारयाणं च ।
२४वयणाविस२५तत्तलेसाण पणमिमो २६सीयललेसाण ॥ ४ ॥
२७चउदस-२८दसपुव्वीणं २९एगारसअंगसुत्तधारीणं ।
३०संभिन्नसोयाण तहा ३१दुवालसंगीण सव्वासिद्धाणं ॥ ५ ॥
३२उग्गतवचारीणमेव बत्तीसथुइपयाणं च ।
आइम्मि नमो ॐ ह्रीँ पढमपयाओ छट्ठिबहुवयणं ॥ ६ ॥

पढमा वायणा ॥ छ ॥

१खीरासव-२महुआसव-३अमियासवलद्धियाण पत्तेयं ।
४अक्खीणमहाणसठियाण ५संभिन्नसोयाण ॥ ७ ॥
तत्तो ६पयाणुसारीलद्धीणं तह य ७बीयबुद्धीणं ।
तत्तो य कुट्ठबुद्धीणं सव्वपया ॐ नमो पुव्वं जिणओहिं ॥ ८ ॥
आरब्भा जाव य वेउव्विलद्धिपययं च ।
१चउदस-२दसपुव्वीणं १तव-२मण-३एगारसंगीणं ॥ ९ ॥
ए ए चउवीसपए नायव्वे सूरिणा पव्वरमंते ।

मायावण्णविरहिए नूणमुवरिऊए निच्चं ॥ १० ॥
बीया वायणा ॥छ॥

ध्यानविशेषमाह—

सुक्कज्झाणेणेसो कम्मक्खयकारणे परममंतो ।
झायव्वो तिक्कालं निच्चं परमिट्ठिमुद्दाए ॥१॥
किं सुयसुयमुवहणं झाणं धरिऊण जोणिमुद्दाए ।
विज्ञंसो सोहग्गं पावइ य जईण जोएणं ॥२॥
उत्त[illegible]यवण्णं झाणं धरिऊण सुभगमुद्दाए ।
[illegible] सूरिविज्झं(ज्जं) [illegible] म्मे तिहुयणं सयलं ॥३॥
[illegible] चक्कमुद्दाए ।
जो झाइ [illegible] खयं ज[illegible] रिउक्कमो ॥४॥

मुद्रया रिपुक्षयार्थम्, कृष्णध्यानेन मासं यावद् ध्येयः। अष्टोत्तरशतं १०८ दिने मन्त्रराजस्य कर्मक्षयार्थं स्मरेत् ॥

इयाणि मंतस्स विवरणं, झाणविहीय भणणइ—

मेरु सद्देण अरिहंतत्तणं वुच्चइ । अरिहंत त्तणेणं अरिहंता जहा चक्केण चक्की, रज्जेण राया। अरिहंतत्तणे सोलस अंसा। अंशानां स्थापना तत्तं केवलिणो जाणंति। सव्वे गणहारिणो तेरसंसा तेण तित्थयरनाणुप्पत्तीए सुयलद्धी हवइ। तेसिं सामन्नभवा भवत्थाण केवलिणं च। ओहि-परमोहि-सव्वोहि-अणंताणंतोहिजिणा एगारसंसा। उज्जु-विउलमइणो खीरमहुआ अमया[पया ?]सवलद्धिणो य सव्वे दसंसा, तेण एएसु जिणसद्दो पयट्टइ। वाइणो महानिमित्तिणो विज्जासिद्धा तवस्सिणो य चउद्दस-दसपुव्विणो अट्ठंसा, तेण एएसु तिकालविसयं नाणं पवत्तइ। अट्ठंसा संसारमग्गिणो मुक्खमग्गिणो य भणिया। सोलस-तेरसंसा दसंसा एगारसंसा मुक्खमग्गिणो नूणं। अरिहंतत्तणं मुक्खतरुबीयभूयं अरिहंता अंकूरा ॥ सेसा साहपसाहव्वाणिया। अतः कारणात् मेरुरूपे[1] मन्त्रराजे स्मर्यमाणे जिनप्रभा भवति। जिनेन्द्रस्य परिवारो गणधरादयः। दोपनिग्रह[2] इति दोषशब्देन अष्टादश दोषा अज्ञानादयः। मेरु इत्यक्षरस्यानेकधा व्याख्या दिग्मात्रमिदम्। तत्त्वं तत्त्वविदो जानन्ति। अर्हन् स्तुत्यगुणसंपूर्णो भगवान्। तेन स्तुतिपदानि भगवतामृद्धिस्थानीयान्युक्तानि ॥ इरि किरि सिरि हिरि इति विद्यादेवता वीतरागगुणाश्रिताः। नामसादृश्यमन्त्ररूपाः पृथक्कर्मसंपादकाः। तेनैकोनविंशत्यतिशयप्रातिहार्यस्थानीयाः। विद्यापदानि वग्गु वग्गु इत्यादि पञ्चदशसंख्यानि वीतरागस्तुतिरूपाणि विद्याप्रवादपूर्वादर्थो ज्ञेयः। पूर्वाणि संस्कृतभाषया। यदा ईप्सितकर्मणि ध्यानं तदा विद्योच्यते। पूजाकाले प्रस्थानमुच्यते। मोक्षार्थे पीठमुच्यते। चतुःपीठस्वामी मेरुरूपो महामन्त्रः। विद्या विभागपदसंज्ञा ॥ छ ॥

ध्यानमनया रीत्या कर्त्तव्यम्—रागता संसारमूलम्। वीरागता मोक्षमूलम्। रागस्थानीये वस्तुनि ध्यायमाने। संसारो यथाहि तथाहि मोक्षो वीतरागे ध्यायमाने। यथा वीतरागस्य त्रिभुवनप्रभुत्वं भवति तथा वीतरागविद्येयं त्रिभुवनवश्यादिषट्कर्मकारिणी मोक्षकारिणीति। एवं ज्ञात्वा सर्वस्तुतिपदप्रारम्भे विद्याविभागप्रारम्भे च ॐमिति सर्वलोकस्यात्मनश्च शान्ति-पुष्टि-ऋद्धि-वृद्धि-स्फूर्ति-शिवायोच्चारणीयः। ह्रीं वश्यार्थे। श्रीं ज्ञानार्थे। युगपन्नोच्चारणीयानि इति सबीजध्यानम्। एभिर्विना निर्बीजं स्यात् तत् केवलं मोक्षाय ॥ छ ॥

ॐ नमो जिणाणं स्नानम् १, ॐ नमो ओहिजिणाणं विलेपनम् २, परमोहिजिणाणं माला ३, अणंतोहिजिणाणं मुकुट–(टम्) ४, अणंताणंतोहिजिणाणं तिलकम् ५, केवली ६–

१ आर्हन्त्यरूपे। २ वक्ष्यमाणमिदम्।

भवत्थकेवली कुण्डल [ म् ] ७, अभवत्थकेवली ग्रैवेयम् ८, चउदस ९–दसपुव्वीण अङ्गद [ म् ] १०, एगारसंगीणं हारु (र.) ११, ॐ नमो बुद्धबुद्धिणं १२, बीयबुद्धिणं केयूरवरमुद्रा १३, ॐ नमो उग्गतवचारीण सितवस्त्रम् १४, ॐ नमो गोयमस्स महादाणस्स[१] लब्धिचिन्ता १५, ॐ नमो सुहम्मसामिणो गणचिन्ता १६, सव्वेसिं एएसिं सौभाग्यप्रभा १७, ॐ नमो बाहुबलिस्स केवलज्ञानम् १८ ॥

ॐ वग्गु वग्गु महुरे प्राकार [ · ] १, इरि कालि पिरि कालि पद ४ प्राकार [ : ] २, इरियाए इत्यादि पद ६ प्राकार : ३, ॐ इरि इरि कालि किरि किरि पिरि पिरि सिरि सिरि पद ४ हिरि हिरि पद ५ आयरिय ६ पाडिहेरचिन्ता किरि मेरु ७ जिनप्रभाशोभ. दोप निग्रह [२]कल्याणत्रिकमयं ध्यानम् ।

ध्यानविधि · समाप्त · ॥

इदानीं साधनाविधिरुच्यते—

*यस्मिन् देशे स्व-परचक्रोपद्रवो न भवति, यत्र राजा चक्री वा स्वयं राज्यं करोति,* यत्र नो दुर्भिक्षम् , यत्र तीर्थम् , यत्र भूमी रम्या काचित् , तत्र देशे गत्वा गुरोरनुज्ञा गृहीत्वा श्री–ह्रीप्रधानजनसंकुले क्षेत्रे वसित्वा उत्तराभिमुखमन्दिरे नि शल्ये समेति स्तोकजन-प्रसरे वसित्वा सर्वविकृतीर्विमुच्य सहस्रपत्रकमले गौतममालिख्य ॐ क्रौं ह्रीँ श्रीँ अनेनाहूया-त्मरक्षापूर्वं करजापो लक्षमान कर्त्तव्य । ब्रह्मव्रत त्रिधा विशुद्धं विधाय जिनवन्दनं विनाऽ-न्यत् पाठादिकं कर्म नो विधेयम् । वर्द्धमानजिनजन्म ज्ञानकल्याणकं(क)दिने चन्द्रप्रभ-धूपभयोरथवान्येषा न हि । अथवा महाशालिभक्तं घृतपुरा पक्वान्नं गोदुग्ध-द्राक्षापानम् । उभयकालस्नानम् , शरीरे सुगन्धिविलेपनम् , कृष्णागु (ग)रु कर्पूरपूजा विधाय पुष्पित-फलितोद्याने द्वात्रिंशत्सहस्रपुष्पजापो विधेय । पद्मासनं विनाऽन्यासने नोपवेष्टव्यम् । तत सिद्धो भवति । साधनाधिप्राकारेन । अन्य प्रकारो नास्ति ॥ ठ ॥

इत्थतरे तइया थायणा भण्णइ—

रोगाइरिउजईण, नमो जिणाण नमो मह होउ ।
एव ओहिजिणाण, परमोहीण तहा तेसिं ॥१॥
एवमणतोहीण, णताणतोहिजुयजिणाण नमो ।
सामन्नकेवलीण, भवाभवत्थाण तेसिं तहा ॥२॥
उग्गतवचरणच(चा)रीणमेवमित्तो नमो होइ ।
चउदस-दसपुव्वीण, नमो तहेगारसंगीण ॥३॥

१ महादान दीक्षाभिषेक । २ जन्म दीक्षा ज्ञान [ म् ] ।

एएसिं सव्वेसिं, एवं काउं अहं नमोकारं।
जमियं विज्जं पउंजे, सा मे विज्जा पसिज्झिज्जा ॥४॥

निच्चं नमो भगवउ बाहुबलिस्सेह पण्हसमणस्स ।
ॐ वग्गुं वग्गुं निवग्गुमग्गंगयस्स तहा ॥५॥

समणे विय सोमणसे, महुमहुरे जिणवरे नमंसामि ।
इरि काली पिरि काली, सिरि काली तह महाकाली ॥६॥

किरियाए हिरियाए, असंगए तिविहकालयं विरए ।
सुहसाहए य तह मुत्तिसाहए साहुणो वंदे ॥७॥

ॐ किरि किरि कालिं पिरि पिरि कालिं च सिरि सिरि कालिं ।
हिरि हिरि कालि पयंपिय, सरि य सरि य आयरिय कालिं ॥८॥

किरि मेरुं पिरि मेरुं, सिरि मेरुं तह य होइ हिरि मेरुं ।
आयरियमेरुं पयमवि, साहंते सूरिणो वंदे ॥९॥

इयमंतपयसमेया, थुणिया सिरिमाणदेवसूरीहिं ।
जिणसूरिसाहुणो सइ, दिंतु थुणंताण सिद्धिसुहं ॥१०॥

**अक्षरस्थापना—**

नमोयुक्त आद्यपद १२, ततो विभक्त्यन्तद्वितीयपद १२, तदन्यतृतीयपद १२, ततोऽपि चतुर्थपद १२, ततोऽपि पदमेकं एवं सर्वपदसंख्या ४९। तत्र प्रथमद्वादशाङ्के द्वादशसु पदेषु प्रत्येकमक्षराणि यथा [1]५।७।९।९।११।९।९।१०।१२।९।७।८ एवं सर्वाक्षरसंख्या १०५। तथा द्वितीयद्वादशपदेषु प्रस्थापना [2]३।३।४।२।१।२।२।४।१।१।२।४ एवमक्षरसंख्या २९। तथा तृतीय-द्वादशके द्वादशपदस्थापना [3]७।५।६।५।६।३।४।५।४।४।४।४ एवं सर्वाक्षरसंख्या ५७। चतुर्थद्वादशके द्वादशपद-

१ नमो जिणाणं। नमो ओ। नमोऽणं०। नमोऽणंताणंतो। नमो सामन्न०। नमो भवत्थ०। नमो उग्गतव०। नमो चउदस०। नमो दस०। नमो एगारसंगीणं ८॥ २ एएसिं सव्वेसिं नमोकारं किज्जा। जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ ॥

३ ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स ॐ वग्गु वग्गु निवग्गु निवग्गु सुमणे सोमणसे महुमहुरे इरि काली पिरि काली सिरि काली हिरि काली ॥

स्थापना [1]४। ४। ७। ६। ६। ६। ६। ४। ४। ४। ४। ६ एवं सर्वाक्षरसंख्या ६१। एकस्मिन् [2]पदेऽक्षर २ एवं सर्वपदेषु सर्वाक्षरसंख्या २५२ द्विशतीद्विपञ्चाशदधिका। श्लोकमानेन श्लो० ७ अ० २८ प्रणवाद्यानि ३ पदान्यत्र विशेषविद्याभाग । पुनरयं पसिज्झिज्जा एतदन्ता सर्वकार्यप्रसाधिका विद्या १। पण्हसमणस्स एतदन्ता स्वप्नविद्या २। हिरियाए एतदन्ता सोहग्गकरी वग्गुविद्या ३ ॥

तथा गौतमस्याक्षराणा शतानि २१ प्रदत्तानि। पूर्वं भगवदाज्ञाया श्रीगौतमेन द्वात्रिंशत् श्लोकप्रमाण कृत । कालदोषाद्धीयमानो जात । दु प्रसहसूरि अहूठ श्लोकान् पठिष्यति। इह च सौभाग्य-परमेष्ठि-ज्ञान-सुरभिरङ्गताञ्जलिमुद्रापञ्चक ध्याने। आह्वानन स्थापन-संनिधापन-संनिरोध-अवगुण्ठन ५ इति मुद्रापञ्चक सर्वस्यापि ध्येयस्य दर्शनीयमादौ ॥ ठ ॥

तइया वायणा सम्मत्ता ॥

इदानीं प्रस्थानविधिरुच्यते—

प्रथम विद्यापीठम्। द्वितीया विद्या। तृतीया उपविद्या। चतुर्थो मन्त्रः। पञ्चम श्रीमन्त्रराज । स्तुतिपदानि यावन्ति तावन्ति भवन्तु। पूजाकाले पूजार्हा द्वादशपदी अष्टादशपदी चतुर्विंशतिपदी द्वात्रिंशत्पदी लेख्या। विद्यापीठं षोडशवलके लिख्यते। सप्रणवद्वादशपदीकं पसिज्झउ स्वाहा एतदन्त प्रथमं प्रस्थाने सप्रणवाक्षरसख्या १४६। यदाष्टादशपदी तदा तृतीय-चतुर्थवलके द्वे पदे, पञ्चम- षष्ठे द्वे पदे। नवम-दशमवलके द्वे पदे। अन्त्यालाप समप्रोऽन्तिमवलके तदाक्षरसंख्यैषा १९२। तस्मान् द्वितीयप्रस्थाने सप्रणवस्वाहासहित अक्षर ४० विभक्त्यन्तपद ११। अक्षर ३। ४। ५। ६। ५। ३। १। ४। २ वृत्ताकार ओल्या लिख्यते। तृतीयप्रस्थाने अक्षरपदसंख्या—पद १९ प्रत्येकमक्षराणि ५। ६। ३। ४। ५। ४। ४। ४। ४। ४। ४। ४। ४। ४। ४। ४। ४। ४। ६ एवं सर्वाक्षराणि ८१ [3]षोडशवलकैर्लिख्यते(न्ते)। ततश्चतुर्थप्रस्थाने पद ७ प्रत्येकमक्षराणि ७। ६। ६। ६। ६। ६। ८ सप्रणवस्वाहापर्यन्तसर्वाक्षर ४५ वृत्ताकारओल्या लिख्यते। पञ्चमप्रस्थाने विरामसहितपद १३ प्रत्येकमक्षराणि ४। ६। ४। ६। ४। ६। ४। ६। ४। ६।। ४। ६। ८ एवं सर्वत्र ६८ मध्ये षटकोणं कृत्वा लिख्यते। अन्त्यपदं मध्ये शेषाणि एकमेकं कोणे एकमेकं बहिर्यथाक्रमेण।

---

१ किरियाए हिरियाए उ किरि किरि कालि पिरि पिरि कालि सिरि सिरि कालि हिरि हिरि कालि आयरिय कालि किरि किरि मेरु पिरि मेरु सिरि मेरु हिरि मेरु आयरिय मेरु ॥

२ स्वाहा ॥

३ फडूके।

समग्रसंख्यामीलने अक्षर ३८० श्लोक ११ अक्षर २८ द्वादशपदप्रस्थानम् । यदाष्टादशपदीकं षट्कोणबहिर्भागे क्रमेण पडेव मेरवः इरि मेरुं वर्जयित्वा षट्कोणमध्यकोणे ह्स्क्ष्ह्रौँ ह्स्क्ष्ह्रीँ ह्स्क्ष्ह्रा पाठः। ह्स्क्ष्हेँ ह्स्क्ष्हूँ हूँ फ्रूँ एषामक्षराणां स्थापना क्रियते। षट्कोणमध्यभागे ॐ ह्रीँ अर्हँ चतुष्पीठस्वामीने नमः इत्यालिख्यते। सामान्येन सर्वाणि पदानी ॐ ह्रीँ स्वाहा उच्चारणीयानि। सप्तपदेषु विशेषोऽयम्—ईँ क्लीं क्षाँ क्ष्वीँ प्राँ प्री प्राँ प्रीं स्राँ श्रौँ ह्राँ ह्रीँ इरि कालिए तेषु पदेषु यथाक्रमेण योजनीयानि। शेषं तदवस्थामेव॥

इति सूरिमन्त्रगर्भितविद्याप्रस्थानपटविधिः समाप्तः॥

**इदानीं मन्त्रशुद्धिर्भण्यते—**

यावन्ति पदानि मन्त्रराजे तावन्ति तान्येव तादृशानि कालि कालि युक्तानि मन्त्रपीठे २। यावन्त्येव मन्त्रपीठे तावन्त्येवोपविद्यायाम्, किरियाए इत्यादि उच्चार्यमाणायाम् ३। यावन्त्येवोपविद्यायां तावन्त्येव वग्गु वग्गु सुवग्गु महावग्गु निवग्गु इत्यादि आद्यपञ्चदशपदसहितानि तादृशान्येकवारोच्चार्यमाणकालीयुक्तानि सौभाग्यविद्यायाम् ४। स्तुतिपदानि वाचनाविशेषज्ञातव्यानि। साऽपि पञ्चधा। पूर्वं गौतमवाचना। ततः श्रुतकेवलिवाचना ज्ञानप्रवादपूर्वात् प्रभवेन कृता। तदनन्तरं वज्रस्वामिवाचना। तेन वर्धमानविद्या। चत्वारि स्तुतिपदानि पञ्चपरमेष्ठिपदानि च गृहीत्वा उपाध्याययोग्या विभिन्नीकृता। वीरे वीरे इत्यादि पदानि सौभाग्यविद्योपविद्यामध्यादुद्धृत्य ह्रूं ह्रः ह्रौँ आलीढानि॥ छ॥

तदनन्तरं नागेन्द्र—चन्द्र—निर्वृति—विद्याधरवाचनाः। ताश्च प्रवर्त्तन्तेऽद्यापि। तेषां भगवतामपि किञ्चिन्मात्र विभिन्ना विसदृशा जाताः। सा च मेरुसंख्याविशेषणज्ञातव्या। पूर्वं मेरुनामानि। इ १ कि २ गि ३ पि ४ फि ५ चि ६ सि ७ हि ८ वि ९ मि १० आ ११ अंते रि इति।

गौतमवाचनायां एकादशमेरवः ११। श्रुतकेवलिवाचनायां दश १०। वज्रस्वामिवाचनायाम् ९। नागेन्द्रादिवाचनायाम् ९। ८। ७। ६। ५। नवाष्टौ सप्त षट् पञ्च। नवाष्टसंख्या व्युच्छिन्ना एव। नवाष्टसंख्यानां मेरूणां ग्रन्थन-संदर्भण-अवगुण्ठन-संपुट-संपल्लव-संनिरोधन एतानि अक्षराणि तिष्ठन्ति। अतो विच्छित्तिः। एतान्यक्षराणि विचित्राकारतया उच्चारयितुं न शक्यन्ते। द्वितीयं व्युच्छित्तिकारणम्। षट् सप्त पञ्च प्रवर्तिष्यन्ते। चन्द्रवाचनायां सप्त पञ्च च। विद्याधरवाचनायां षट्। नागेन्द्रवाचनायां पञ्च १। एवं क्रमेण हीयमाने काले श्रीदुःप्रसहसूरिमेरुत्रयं पठिष्यति। आत्मीयगच्छगुरौ विपन्ने गच्छान्तरीयसूरिणा स्थापितानां भविष्यमानसूरीणां विसदृशा वाचना संजाता। स्तुतिपदान्येतानि ३२। २४। १८। १२। १३। ८ यावत् पञ्च भविष्यन्ति। सर्वकार्यप्रसाधिका विद्यानाम प्रथमं प्रस्थानम् १। बाहुबलिविद्या द्वितीयं प्रस्थानम् २। सौभाग्यविद्योपविद्या तृतीयं प्रस्थानम् ३। मन्त्र-

पीठं चतुर्थं प्रस्थानम् ४। एषा प्रभुर्मन्त्रराज ५। एषा मील्ने कोटचंशो मन्त्र गौतमाद् वज्रस्वामिनं यावत् कोग्चश[ ] प्रवर्त्तित। अत पर व्युच्छिन्न एव। तेन कोटचंश स्मरणार्थं कोटिकगण कृत। श्रीवज्रस्वामिशिष्यात् तिस्र शाखा सजाता। अंशानयनोपायश्चायम्–मेरुरूप मन्त्रराजस्याशा षोडश ध्रुवा १६। पूर्वं विद्याविभागं दत्त्वा आसन्नलग्न अर्वाककाले लग्नवेलायां एते शिष्यस्य दातव्या। यतो यावत् तीर्थं तावदेते भविष्यन्ति शेषा पूर्वोक्तस्तुत्यपदीं(दा)शा ग्राह्या। अष्टौअष्टौ बाहु०। सौभाग्य०–उप०–मन्त्र० सर्वषा समुच्चये अंशा जायन्ते। विषमांशो महाफल। समंशो मध्यमफल। अफलो न हि एकोऽपि ध्रुवम्।

इति मन्त्रशुद्धि समाप्ता।

**इदानीं नामसदृश कोटचशाख्य तप प्रोच्यते—**

पूर्वं तपोविधानम्। तपसि क्रियमाणे आदेशो भवति। सिद्धिर्भविष्यति नवेत्येव पश्चात् पूर्वोक्तनीतिद्वयेन साधना कार्या, तच्चेद् तप। पूर्वं उपवास। तत पञ्च निवी। आचाम्लं १ पुन ५ निवी। आ १ नि ५ आ १ नि १ चउत्थं १ एव दिन २१ आद्यविद्यायाम्। अहर्निश पठन चिन्तनं विकथाविवर्जनं एकमनसाऽहोरात्रिकामनुष्ठानम्। प्रथमपरिपाटी १॥ उप १ नि १ आ ३ नि ४ आ १ नि २ उप १ पूर्वोक्तव्यापारोऽत्र विशेषेण कायोत्सर्गेण चत्वारिंशचतुर्विंशस्तवचिन्तनम्। अथवा सकलमन्त्रस्याष्टोत्तरशतचिन्तनम्। द्वितीया परिपाटी २॥ उप १ निवी ८ आ ५ निवी ७ आ १ निवी २ उप १ पूर्वव्यापारो ज्ञेय। विद्यातृतीये तृतीयपरिपाटी ३॥ उप १ नि ५ आ १ उप १ अत्रापि पूर्वनीति चतुर्थपरिपाटी ४॥ मौनव्रतेन कर्पूरप्रचुरसुरभिद्रव्यपूजाञ्चितगौतमाराधनतत्परेण त्रिसन्ध्यं ध्यान कार्यम्। स्त्रीमुखमपि नावलोक्यम्। अनया रीत्या षोडशाचाम्लानि नैरन्तर्यम्, पञ्चमपरिपाटी ५॥ यदि शक्तिस्तदाऽव्युच्छित्ति। अथ ओली कृत्वा पार्यते॥ छ॥

तपोविधि समाप्त॥

[अत्र स्तुतिपाठ पूर्वं २४-२५ पृष्ठे मुद्रितोऽस्ति
तथैव मूलप्रतौ लिखितस्तेनात्र न पुनर्मुद्रापित]

**इदानीं पदसख्या भण्यते—**

स्तुतिपद्या द्वात्रिंशत्संख्याया आद्यवाचनाया पद ७३, द्वादशपद्या तृतीयवाचनाया पद ४९, [1]इमानि पट्सप्ततिपदानि[2]। स्तुतिपदद्वात्रिंशत ३२, एर्णसि इत्यादि द्वादश १२। एव ४४। पञ्चमन्त्रराजपदानि ५ पञ्चमन्त्रपीठपदानि ५। सप्तोपविद्यापदानि ७। पञ्चमहादेवतापदानि ५। दशगाहुबलिपदानि। सप्रणवभगवद्बाहुबलि२–प्रज्ञाश्रमण३–महाप्रज्ञाश्रमण४–

१ वक्ष्यमाणानि। २ क्रमेण भावयति।

वग्गु५-सुवग्गु६-निवग्गु७-सुम८-सोम९-महु१० इति ॥छ॥ इमानि त्रिसप्ततिपदानि। स्तुतिपदान्यष्टादश १८। नमो सुहम्मसामिणो गणहरस्स महादाणस्स २ गोयमाईणं ३ एवं २१। एएसिं इत्यादि पदद्वादश, एवं त्रयस्त्रिंशत् ३३। दशमहाविज्जापदानि १० एवं ४३, सप्तमन्त्रराज-मन्त्रपीठयोः। प्रत्येकम् ७। नवोपविद्यायाम् ९, एवं २३ सप्तमहादेवाता[नाम्] ७, एवं त्रिंशत्; सर्वमीलने ७३। मन्त्रराजपदानि पञ्च षट् सप्त वा। पञ्च-सप्तपदानि प्रशस्यानि। न षट्, केषां वाचनायां कानि मन्त्रराजपदानि दशानां मध्याद् भवन्ति। गौतमभाषितानि किपि सिहिआ इमानि पञ्चैव। इगिपिफिवि। वृद्धश्रुतधराणां पदानामेष क्रमः संभाव्यते। वैसदृश्यं दृश्यते तत्र ज्ञायते २। एकोनपञ्चाशत् [1]पूर्वोक्तानि। चतुर्विंशतिस्तुतिपदवाचनायां पदान्येकोत्तरशतानि चतुष्पीठोद्धरणे द्वात्रिंशतप्यां साष्टं शतम्। वाच्यपदान्येव। विशेषश्चायम् अष्टादशपदद्वितीयवाचनायां सौभाग्यविद्यापद आद्यभागपद १६ अन्तभागपद ७ प्रस्थानपटविधौ वलयाकारविभागेन ऊनानि अधिकानि भवन्ति ॥

मतान्तरेण पदसंख्या समाप्ता ॥ छ ॥

रेवती १–रोहिणी २–नागार्जुन ३–आर्यखपुट ४–यशोभद्राचार्य ५ इति नामानः सूरयः। एते मन्त्रसिद्धयः मिथ्या मे दुष्कृतं वाऽस्तु। शुद्धमशुद्धं कल्पयत। यतो भगवत्कालेऽप्येकादश गणधरा नवगणा हि अनेकधा जिनशासनम्। अनेकधा वाचना इति परिभाव्याऽस्य कल्पस्यान्ते स्वनाम न निगदितम्। किञ्चित् तत्त्वं तत्त्वविदो जानन्ति। अङ्गविद्यामध्ये महाविशेषोऽस्ति, आलम्बनमात्रमेतत् क्षम्यतां क्षम्यतां सूरिवराः प्रवर्त्ततां जैनो धर्मः। अतिशयेन मन्त्रस्येष्टांशं जानन्तु भूत-भविष्य-वर्त्तमानसूरयः प्रसन्ना भवन्तु सिद्ध्यन्तु।

समाप्तोऽयं श्रीसूरिमन्त्रकल्पः। ग्रन्थाग्रम् २२० ॥

[मन्त्राम्नायः–]

ॐ नमो भगवओ रिसहजिणस्स आइगरस्स तित्थगरस्स जं सेयं चक्कं जलंतं गच्छइ। तेण चक्केण जं दुं(दु)ट्ठं जं च विसं जाला गद्दभा शाकिनी। चउरासीइ वायाओ बत्तीसं लूयाओ सत्तावीसं च अधयगडाइं अट्ठावीसं च पुलयाओ जं चम्म तं सव्वं ॐ हन हन दह दह पच पच मथ मथ छिन्द छिन्द भिन्द भिन्द सुदंसणेणं चक्केणं इंदस्स वज्जेणं हुं फट् स्वाहा। वार ७ अथवा २१ अथवा १०८ शतम् ॥ श्री ॥ छ ॥ श्रीः ॥

---

[1] द्वादशपद्याम् ॥

# मलधारिगच्छ–सूरिमन्त्रकल्पः॥

## [ दशवक्तव्यताधिकारमयः ]

श्रीमलधारिगच्छसंप्रदायगतस्य श्रीसूरिमन्त्रस्य किञ्चिद्विचारो लिख्यते। तत्र च दश वक्तव्यताः। प्रथमं मुद्रादिवक्तव्यता १। ततः प्रथमपीठवक्तव्यता २। द्वितीयपीठवक्तव्यता ३। तृतीयपीठवक्तव्यता ४। चतुर्थपीठवक्तव्यता ५। पञ्चमपीठवक्तव्यता ६। पञ्चपीठमयसंपूर्णसूरिमन्त्रवक्तव्यता ७। सविस्तरदेवतावसरविधिवक्तव्यता ८। संक्षिप्तदेवतावसरविधिवक्तव्यता ९। मन्त्रमहिमवक्तव्यता १०, चेति।

तत्र प्रथमं मुद्रादिवक्तव्यता—मुद्राश्च शास्त्रान्तरेषु भूयस्यो दृश्यन्ते। परं सूरिमन्त्रोपयोगिन्यः सप्तदशमुद्राः प्रथमं शिक्षणीयाः। तद् यथा—उत्तानहस्तद्वयेन वेणीबन्धं विधायाङ्गुष्ठाभ्यां कनिष्ठिके तर्जनीभ्यां च मध्यमे संगृह्यानामिके समीकुर्यादिति परमेष्ठिमुद्रा १। आत्मनोऽभिमुखदक्षिणहस्तकनिष्ठिकया वामकनिष्ठिकां संगृह्याधः परावर्तितकराभ्यां गरुडमुद्रा २। वामहस्ततलेदक्षिणहस्तमूलं संनिवेश्य करशाखा विरलीकृत्य प्रसारयेदिति चक्रमुद्रा ३। परस्पराभिमुखौ ग्रथिताङ्गुलीकौ करौ कृत्वा तर्जनीभ्यामनामिकां गृहीत्वा मध्यमे प्रसार्य तन्मध्येऽङ्गुष्ठद्वयं निक्षिपेदिति सौभाग्यमुद्रा मध्यमसौभाग्यहेतुः ४। अत्रैवाङ्गुष्ठद्वयस्याधः कनिष्ठिकां तदाक्रान्ततृतीयपर्विकां न्यसेदिति सर्वाङ्गसौभाग्यमुद्रा सौभाग्योत्कर्षहेतुः ५। दक्षिणाङ्गुष्ठेन तर्जनीं संयोज्य शेषाङ्गुलीप्रसारणेन वामहस्तं हृदि न्यसेदिति प्रवचनमुद्रा ६। उभयोः करयोरनामिका-मध्यमे परस्परानभिमुखे ऊर्ध्वीकृत्य मीलयेत्, शेषाङ्गुलीः पातयेदिति पर्वतमुद्रा ७। अन्योऽन्यग्रथिताङ्गुलीषु कनिष्ठिकाऽनामिकयोर्मध्यमा-तर्जन्योश्च संयोजनेन गोस्तनाकारा सुरभिमुद्रा ८॥ दक्षिणहस्तस्य तर्जनीं वामहस्तमध्यमया संदधीत, मध्यमां च तर्जन्या, अनामिकां कनिष्ठिकया, कनिष्ठिकां चानामिकया एतच्चाधोमुखं कुर्यादेषा धेनुमुद्रेत्यन्ये ९। उत्तानौ किञ्चिदाकुञ्चितकरशाखौ पाणी विधारयेदित्यञ्जलिमुद्रा १०। हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वाङ्गुष्ठसंयोजनेनावाहनी ११। इयमेवाधोमुखा स्थापनी १२। संलग्नमुष्ट्युच्छ्रिताङ्गुष्ठौ करौ संनिधानी १३। तावेव गर्भगाङ्गुष्ठौ संनिरोधनी १४। मुष्टिं बद्ध्वा प्रसारिततर्जनिका-मध्यमोपरिनिवेशिताङ्गुष्ठाऽवगुण्ठनमुद्रा १५। दक्षिणकरेण मुष्टिं बद्ध्वा तर्जनी-मध्यमे प्रसारयेदित्यस्त्रमुद्रा १६। प्राहस्य पुष्पादेरुपरि संहारेण हस्तं प्रसार्य कनिष्ठकादि-तर्जन्यन्तानामङ्गुलीनां क्रमसंकोचनेनाङ्गुष्ठमूलानयनाद् विसर्जनमुद्रा १७।

एताः सप्तदशमुद्राः पुरस्तादुपयोक्ष्यन्ते। तत्र सर्वत्र लब्धिपदानि पीठानि च ज्ञानार्थं श्रींपूर्वाणि, वश्यार्थं ह्रींपूर्वाणि। शान्तिकादिकेषु कार्येषु प्रणवपूर्वाणि इति ज्ञेयम्। कर्मक्षयार्थं

लब्धिपदानि पीठानि च परमेष्ठिमुद्रया वा निर्मुद्रं वा प्रणव-ह्रीं-श्रींरहितानि केवलान्येव स्मरेदिति। तथा यत्र पीठे यौ जाप-होमौ उक्तौ तौ तेन तेन वक्ष्यमाणेन तपसा सह क्रियमाणौ तत्फलदौ, तपसि अकृते जाप-होमौ प्रायोऽल्पफलौ। तथा यदा जापं होमं वा आरभेत तदाऽन्तर्मनसं एवं वदेत्। संवत्-अमुकमास-तिथिवारे अहं अमुकसूरिशिष्योऽमुकसिद्धये अमुकं जापं होमं वा आरभे इति। तथा सूरिमन्त्रेऽन्तर्जल्पाकार-ओष्ठचालनवर्जितो जापः, कार्यो न ओष्ठचालनमय इति॥

इति मुद्रादिवक्तव्यताऽधिकारः प्रथमः।

**अथ प्रथमपीठवक्तव्यताऽधिकारः—**

तत्र प्रथमपीठं विद्यापीठं नाम। तच्च लब्धिपदद्वादशकं 'पसिज्झउ स्वाहा' इत्यन्तं सप्तदशोत्तरशता[११७]क्षरनिष्पन्नम्। अस्याधिष्ठात्री सरस्वती, तस्याः पूजा-स्तुती कुर्यात्। आराधना तपोविधिस्त्वयम्—

उ नि आ नि आ नि आ नि उ इगपाणिगपणेगपणिगइगमेगं।
चिंतणपढणं विगहाचाओऽहोरत्तणुट्ठाणं॥

अनेन तपसा महाफलम्, अन्यथा त्वल्पफलम्। पद्मासनस्थः पूर्वाभिमुख उत्तराभिमुखो वा परमेष्ठिमुद्रया गरुडमुद्रया वा सहस्रद्वादशकप्रमाणं जपेत्। श्वेतध्यानेन सामान्येन सर्वसिद्धिकरम्। तथा क्षीराश्रवादिलब्धिपदानि षट्सहस्रं श्वेतजपमालया श्वेतध्यानेन जप्यन्ते। षष्ठलब्धिपदान्ते तु 'जमियं सारस्सयं पउंजामि तं मे सारस्सयं पसिज्झउ स्वाहा' इत्यभिलापः। सिद्धसारस्वतमिदं प्रथमपीठेऽत्र १२ सहस्रजापानन्तरं होमः कार्यः

तद्विधिश्चायम्—हस्तमात्रं चतुरस्र कुण्डं भौमं हसन्तीमयं वा कृत्वा अरणेर्वा रविकान्ताद् वा तत्राग्निं प्रज्वाल्य मन्त्रेण प्रतिष्ठापयेत्। स चायम्—'मनो जूतिर्जूपतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवाः स इह मा दयन्तामों प्रतिष्ठा'॥ वारसप्तकं भणित्वा अक्षतक्षेपः कार्यो ज्वालामालाकरालेऽग्नौ अग्नेश्च सप्तजिह्वाः स्मरेत्। तत्र ईशानजिह्वायां मध्यजिह्वायां वा जुहुयात्। किं तत्? सप्तघृताहुतयो विद्यापीठेन। अथ दशांशेन द्वादशशतलक्षणेन गुटिकाभिर्होमाः। ताश्चेमाः—गरुडाख्यतण्डुलघृतैकवर्णगोदुग्धखण्डमय्यः। ताभिर्होमो विद्यापीठेनैव। पश्चात् केपाञ्चिदिष्टवस्तूनां कत्यपि होमास्त्रिस्त्रिः। पूर्णाहुतौ घृतभृतं नालिकेरम्। इदं च तदा वक्तव्यम्—'इमां पूर्णाहुतिं भगवति सरस्वति प्रतीच्छ मम कामितं कुरु स्वाहा॥' यावन्नालिकेरं भस्मसाद् भवति तावत् प्रतीक्ष्यम्। वन्हिं च महाघृतप्लवेन दीपयेत्। 'घृतहीनं दहेद् राष्ट्रम्' इतिवचनात्। तद् भस्म संगृह्य स्वयं धारयेत। इष्टेभ्यो वाऽल्पमल्पमर्पयेत्। शान्ति-तुष्टिकरम्।

इति होमविधिः॥

अनयैव रीत्या विद्यामुपविद्यायां होम कार्यः । नवरं आहुति-होमौ तत्र तेनैव मन्त्रेण देवतानाम च यथार्हमिति । एवं तपसा जपेन होमेनाराधिते प्रथमपीठे आचार्यः सरस्वती १, रोगापहारिणी २, विषापहारिणी ३, बन्धमोक्षणी ४, श्रीसंपादनी ५, परविद्याच्छेदनी ६, दोषनाशनी ७, अशिवोपशमनी ८—एता अष्टमहासिद्धी स्वस्य परस्यापि साधयति। कोऽर्थः ? यदा स्वस्य परस्य वा सारस्वतमुत्पादयितुं रोगं हर्तुं विषं हन्तुं बन्धं मोक्षयितुं श्रियं कर्तुं कार्माणादि छेत्तुं दोषं नाशयितुं म(दु.)स्त्वमुपशमयितुं ईहते तदा प्रथमपीठं स्मरेत्, सिद्धिः स्वल्पयाऽपि स्मरणया । आभिरेवाष्टाभिर्विद्याभिः श्रीमानतुङ्गसूरिणा "यैः शान्तराग०" इत्यादि-"जलभारनम्रै" इत्यन्तानि अष्टौ काव्यानि गर्भितानि दृश्यानि। तानि अष्टौ "ज्ञानं यथा त्वयि विभाति कृतावकाशम्" इत्यादिना नवमेन काव्येन सहितानि प्रातः प्रातर्यः पठेत् स सारस्वतादीः पूर्वोक्ता अष्टौ सिद्धी प्राप्नोति, स्वं परं च प्रापयति। तथा द्वादशलब्धिपदानि एवं एवं स्मरेत्। प्रथमेन लब्धिपदेन सर्वतीर्थसलिलस्नानम् १, द्वितीयेन चान्दनमङ्गराग २, तृतीयेन श्वेतानुपहतवस्त्राणि ३, चतुर्थेन मालेत्यादिधवलपुष्पमालाम् ४, पञ्चमेन सौवर्णं मुकुटम् ५, षष्ठेन सौवर्णं तिलकम् ६, सप्तमेन रत्नखचितं सुवर्णमयं कुण्डलं दक्षिणकर्णे ७, अष्टमेन तदेव वामकर्णे ८, नवमेन सौवर्णं ग्रीवाभरणम् ९, दशमेन रत्नखचितं सुवर्णमयमङ्गदं वामेतरबाहौ १०, एकादशेन रत्नखचितं सुवर्णमयमङ्गदं वामबाहौ ११, द्वादशेन जात्यमुक्ताफलमयं हारम् १२, इत्थं स्मरणेन प्रभुत्वधन-धान्यादिलाभ । तथा चोपदिशन्ति—

१स्नाना२ङ्गराग-३वसनो४ज्ज्वलपुष्पमाला
५कोटीर-६पुण्ड्रमय ७-८कुण्डलयुग्मकं च ।
९ग्रैवेय१०-११मङ्गदयुगं १२वरहारमर्क-
संख्यैः पदैर्वपुषि भावय सूरिमन्त्रम् ॥ इति ।

इति प्रथमपीठवक्तव्यताधिकारो द्वितीय ॥

द्वितीय पीठं विद्या—

प्रथम तु यदुक्तं तद्विद्यापीठं नाम पीठमिति भेद । अत्र 'समणस्स स्वाहा' इति यावद् बाहुबली विद्या अक्षर २०, । 'वग्गवादि सौमणसे महु महुरे स्वाहा' इति यावत् सौभाग्यविद्या अक्षर २४, उभयत्र अक्षर ४४ । अस्य द्वितीयपीठस्याधिष्ठात्री मानुषोत्तरशिखरनिवासिनी सहस्रभुजा त्रिभुवनस्वामिनी देवीति ।

आराधनातपोविधिस्त्वयम्—

उ नि आ नि आ नि उ इगेगतिचउदुगदुइगपुव्ववावारो ।
सविसेसो जिणयत्र४०चत्तमतट्ठसयं च उस्सग्गे ॥१॥

'जिणथवचत्त'त्ति लोगस्सुज्जोयगरे चत्वारिंशत् कायोत्सर्गे चिन्तनीया । 'मंतट्ठसयं च'इति अष्टोत्तरशतवारं सूरिमन्त्रं स्मरेत्, कायोत्सर्गं इति गाथार्थः ॥ एवं तपः कुर्वन् प्रथमं बाहुबली-विद्यां सहस्रद्वादशकं स्मरेत् श्वेतध्यानेन । होमः प्रथमपीठवदत्रापि । उत्पन्ने कार्ये ऐर्यापथिकीं प्रतिक्रम्य रजोहरणमुखवस्त्रिके पुरो मुक्त्वा कायोत्सर्गेण अष्टोत्तरशतवारं स्मरेत् । शुभे बाहू ऊर्ध्वमुत्तिष्ठतः । अशुभे त्वधः पश्चान्मुखं वलित्वा परस्परं मिलतः तथा अस्यां जप्यमानायां वादादौ अपराजितत्वम्, प्रत्यनीकोपशान्तिः । तथा अनया बाहुबल्या जप्यमानया शकुनो-पश्रुत्यादि सत्यमेव भवेत् ।

इति बाहुबलीविद्याविचारः ।

अथ द्वितीया वग्घादिसौभाग्यविद्या—

अत्र जापः सहस्राः षोडश सौभाग्यमुद्रया कनकपीतध्यानेन जपस्रगपि हैमी कृमि-जादिमयी वा । होमः स एव । एकत्रापि कृतेन होमेन विद्याद्वयसिद्धिः । अनया च मितम्पचोऽपि दाता राजकुले जनतायां दुष्टेषु सर्वत्र परमादेयतावचनता अनया च जया-विजया-जितत्वा-ऽपराजितत्वानि सिद्ध्यन्ति । तत्र जयः स्वदेशे, विजयः परदेशे, अजितत्वमरिषु, अपराजितत्वं परवादिषु इति सौभाग्यविद्या । आभ्यां द्वाभ्यां विद्याभ्यां निष्पन्नं एकमेव द्वितीयं पीठम् ।

इति द्वितीयपीठवक्तव्यताधिकारस्तृतीयः ॥ ३

अथ तृतीयपीठवक्तव्यताधिकारः प्रस्तूयते—

तृतीयं पीठं मन्त्रपीठं नाम । ॐ किरि इत्यादि स्वाहान्तं,अक्षर ३१ । अस्याधिष्ठाता तु—

अणपणपन्निपइट्ठो, बीसभुओ मंतपीठहिट्ठाया ।
सोलससहस्सजक्खाण, सामिओ जयइ गणिपिडगो ॥१॥

तपोविधिरयम्—उ नि आ उ इगपणेगिगतइए पुव्वो विही समग्गो वि इति । अत्र जापः सितध्यानेन सहस्रा द्वादश । होमस्तु नास्ति । यत्र पुरुषोऽधिष्ठायकः स मन्त्रः, तत्र न होमः । यत्र स्त्री अधिष्ठात्री सा विद्या, तत्र होम इति वचनात् । किरीति कल्पेन्द्रदशकन्यासः किरीति भवनपतीन्द्र-व्यन्तरेन्द्रन्यासः । सिरीति ज्योतिषेन्द्रन्यासः । हिरीति गणिपिटकः, अमल-स्वामिप्रमुखेन्द्रसामानिकन्यासः । महाकालीति सातिशयक्रियानिष्पादनलक्षणः कालो महांश्चासौ कालश्च महाकालः सोऽस्यास्तीति महाकाली जिनस्तन्न्यासः । सातिशयक्रिया च गणधरदेवा-भिषेकः । अप्रतिहतशासनत्वं संघश्रीसंपादकता—भक्तोपधिप्राप्तिर्दुष्टराजदैवोपसर्गस्खलनं दुर्भिक्षकान्तारोल्लङ्घनं शापानुग्रहसामर्थ्यं शिष्यव्यवस्था इत्यादीः सातिशयाः क्रियाः पूर्वोक्त-देवाः कुर्वन्ति । परलोकगतसाधु-श्रावकाणां च परलोकगतिं एते देवा मन्त्रपीठस्मर्तुः कथ-

अनयैव रीत्या निशायामुपविश्याय होम कार्य । नवरं आहुति होमो तत्र तेनैव मन्त्रेण देवतानाम च यथार्हमिति । एवं तपसा जपेन होमेनाराधिते प्रथमपीठे आचार्य सरस्वती १, रोगापहारिणी २, विषापहारिणी ३, बन्धमोक्षणी ४, श्रीसंपादनी ५, परविद्याच्छेदनी ६, दोषनाशनी ७, अशिवोपशमनी ८—एता अष्टमहासिद्धी स्वस्य परस्यापि साधयति । कोऽर्थ ? यदा स्वस्य परस्य वा सारस्वतमुत्पादयितुं रोगं हर्तुं विषं हन्तुं बन्धं मोक्षयितु श्रियं कर्तुं कार्मणादि छेतुं दोष नाशयितुं म.दु )रूपमुपशमयितुं ईहते तदा प्रथमपीठं स्मरेत्, सिद्धि स्वल्पयाऽपि स्मरणया । आभिरेवाष्टाभिर्विद्याभि श्रीमानतुङ्गसूरिणा "यै शान्तराग०" इत्यादि-"जलभारनम्रे" इत्यन्तानि अष्टौ काव्यानि गर्भितानि दृश्यानि । तानि अष्टौ "ज्ञानं यथा त्वयि विभाति कृतावकाशम्" इत्यादिना नवमेन काव्येन सहितानि प्रात प्रातर्य पठेत् स सारस्वतादी पूर्वोक्ता अष्टौ सिद्धी प्राप्नोति, स्वं परं च प्रापयति । तथा द्वादशलब्धिपदानि एव एवं स्मरेत् । प्रथमेन लब्धिपदेन सर्वतीर्थसलिलस्नानम् १, द्वितीयेन चान्दनमङ्गराग २, तृतीयेन श्वेतानुपहतवस्त्राणि ३, चतुर्थेन मालेत्यादिधवलपुष्पमालाम् ४, पञ्चमेन सौवर्णं मुकुटम् ५, षष्टेन सौवर्णं तिलकम् ६, सप्तमेन रत्नरचित सुवर्णमय कुण्डलं दक्षिणकर्णे ७, अष्टमेन तदव वामकर्ण ८, नवमेन सौवर्णं ग्रीवाभरणम ९, दशमेन रत्नरचित सुवर्णमयमङ्गद वामे वरबाहौ १०, एकादशेन रत्नरचित सुवर्णमयमङ्गद वामबाहौ ११, द्वादशेन जात्यमुक्ताफलमय हारम् १२, इत्थ स्मरणेन प्रभुत्वधन धान्यादिलाभ । तथा चोपदिशन्ति—

१स्नाना२ङ्गराग ३वसनो४ज्ज्वलपुष्पमाला
५कोटीर ६पुण्ड्रमय ७ ८कुण्डलयुग्मकं च ।
९ग्रैवेय१०-११मङ्गदयुग १२वरहारमर्क
सख्यै पदैर्वपुषि भावय सूरिमन्त्रम् ॥ इति ।

इति प्रथमपीठवक्तव्यताधिकारो द्वितीय ॥

द्वितीय पीठ विचा—

प्रथम तु यदुक्त तद्विद्यापीठ नाम पीठमिति भेद । अत्र 'समणस्स स्वाहा' इति यावद् बाहुबली विद्या अक्षर २०, । 'वग्गवादि सौमणसे महु महुरे स्वाहा' इति यावत् सौभाग्यविद्या अक्षर २४, उभयत्र अक्षर ४४ । अस्य द्वितीयपीठस्याधिष्ठात्री मानुषोत्तरशिखरनिवासिनी सहस्रभुजा त्रिभुवनस्वामिनी देवीति ।

आराधनातपोविधिस्त्वयम्—

उ नि आ नि आ नि उ इगेगतिचउदुगदुइगपुव्ववावारो ।
सविसेसो जिणयव४०चत्तमतट्ठसय च उस्सग्गे ॥१॥

'जिणथवचत्त'त्ति लोगस्सुज्जोयगरे चत्वारिंशत् कायोत्सर्गे चिन्तनीया। 'मंतट्ठसयं च'इति अष्टोत्तरशतवारं सूरिमन्त्रं स्मरेत्, कायोत्सर्गे इति गाथार्थः॥ एवं तपः कुर्वन् प्रथमं बाहुबली-विद्यां सहस्रद्वादशकं स्मरेत् श्वेतध्यानेन। होमः प्रथमपीठवदत्रापि। उत्पन्ने कार्ये ऐर्यापथिकीं प्रतिक्रम्य रजोहरणमुखवस्त्रिके पुरो मुक्त्वा कार्योत्सर्गेण अष्टोत्तरशतवारं स्मरेत्। शुभे बाहू ऊर्ध्वमुत्तिष्ठतः। अशुभे त्वधः पश्चान्मुखं वलित्वा परस्परं मिलतः तथा अस्यां जप्यमानायां वादादौ अपराजितत्वम्, प्रत्यनीकोपशान्तिः। तथा अनया बाहुबल्या जप्यमानया शकुनो-पश्रुत्यादि सत्यमेव भवेत्।

इति बाहुबलीविद्याविचारः।

**अथ द्वितीया वग्गवादिसौभाग्यविद्या—**

अत्र जापः सहस्राः षोडश सौभाग्यमुद्रया कनकपीतध्यानेन जपस्रगपि हैमी कृमि-जादिमयी वा। होमः स एव। एकत्रापि कृतेन होमेन विद्याद्वयसिद्धिः। अनया च मितम्पचोऽपि दाता राजकुले जनतायां दुष्टेषु सर्वत्र परमादेयतावचनता अनया च जया-विजया-जितत्वा-ऽपराजितत्वानि सिद्ध्यन्ति। तत्र जयः स्वदेशे, विजयः परदेशे, अजितत्वमरिषु, अपराजितत्वं परवादिषु इति सौभाग्यविद्या। आभ्यां द्वाभ्यां विद्याभ्यां निष्पन्नं एकमेव द्वितीयं पीठम्।

इति द्वितीयपीठवक्तव्यताधिकारस्तृतीयः॥ ३

**अथ तृतीयपीठवक्तव्यताधिकारः प्रस्तूयते—**

तृतीयं पीठं मन्त्रपीठं नाम। ॐ किरि इत्यादि स्वाहान्तं,अक्षर ३१। अस्याधिष्ठाता तु—

अणपण्णपन्निपइट्ठो, वीसभुओ मंतपीठहिट्ठाया।
सोलससहस्सजक्खाण, सामिओ जयइ गणिपिडगो ॥१॥

तपोविधिरयम्—उ नि आ उ इगपणेगिगतइए पुव्वो विही समग्गो वि इति। अत्र जापः सितध्यानेन सहस्रा द्वादश। होमस्तु नास्ति। यत्र पुरुषोऽधिष्ठायकः स मन्त्रः, तत्र न होमः। यत्र स्त्री अधिष्ठात्री सा विद्या, तत्र होम इति वचनात्। किरीति कल्पेन्द्रदशकन्यासः किरीति भवनपतीन्द्र-व्यन्तरेन्द्रन्यासः। सिरीति ज्योतिषेन्द्रन्यासः। हिरीति गणिपिटकः, अमल-स्वामिप्रमुखेन्द्रसामानिकन्यासः। महाकालीति सातिशयक्रियानिष्पादनलक्षणः कालो महांश्चासौ कालश्च महाकालः सोऽस्यास्तीति महाकाली जिनस्तन्न्यासः। सातिशयक्रिया च गणधरदेवा-भिषेकः। अप्रतिहतशासनत्वं संघश्रीसंपादकता—भक्तोपधिप्राप्तिर्दुष्टराजदैवोपसर्गस्खलनं दुर्भिक्षकान्तारोल्लङ्घनं शापानुग्रहसामर्थ्यं शिष्यव्यवस्था इत्यादीः सातिशयाः क्रियाः पूर्वोक्त-देवाः कुर्वन्ति। परलोकगतसाधु-श्रावकाणां च परलोकगतिं एते देवा मन्त्रपीठस्मर्तुः कथ-

यन्ति । यत् पूर्वपीठद्वयोस्त कार्यं तदनेन जप्यमानेन निर्विलम्ब सिध्यति । विशेषत सारस्वतम् । सारस्वते उपोष्य जाप प्रारभ्य । श्वेतध्यानेन सहस्रद्वादशकप्रान्ते सिद्धि ॥

इति तृतीयपीठवक्तव्यताधिकारस्तुर्य ॥४

अथ चतुर्थमुपविद्यानाम पीठम्—

किरि इत्यादि स्वाहान्त अक्षर २३ । अस्याधिष्ठात्री—

पउमदहपउमनिलया सव्वगामरणरयणरेहिल्ला ।
चउमहिसुरिंदमणो मोहणरूवा अपडिरूवा ॥१॥

विजया-जया-जयती-नदा भद्दासमन्निया सयय ।
उवविज्जसनिविट्ठा सिरिदेवी दिसउ मज्झ सिरिं ॥२॥

तपाविधिस्त्वयम्—'उ नि आ नि उ इगट्ठपचसत्तेगदुइग तुरियपए'। पूर्वविधिरत्र लोगस्सुज्जोयगरे ४० कायोत्सर्गे मन्त्रं वा अष्टोत्तरशतवार कायोत्सर्गे स्मरेत् । अत्र जाप सहस्रा द्वादश १२००० श्वेतध्यानेन । होमविधि प्रथम द्वितीयपीठवदिहापि । वश्यार्थे किंशुकरक्त ध्यानेन पर्वतमुद्रया सहस्रा द्वादश १२००० । महाभूपानपि वश्य तथा सदिग्धार्थनिश्चय , इष्टस्वप्नविषये जाप अष्टोत्तरसहस्र १००८ उपोष्य श्वेतध्यानेन आदेशो भवति । षोडश सहस्रजापे सारस्वत अव्यभिचारि श्वेतध्यानेन । अस्य निरन्तर जापात् शिष्यलब्धि श्वेत ध्यानेन, गुरुणा वा काचन सिद्धिरस्ति साल्पनहुत्वेनछिन्ना भवति । शापानुग्रहशक्तिरादेय गीस्ता तथा एतज्जापिताऽक्षताना मस्तके गृहादिषु च शिरसि वासक्षेपोऽनेनैव कार्य । विशेषतो योगोद्वहनारम्भे साधूनाम ॥

इति चतुर्थपीठवक्तव्यताधिकार पञ्चम ॥५

पञ्चम मन्त्रराजाख्यपीठम्—

ॐ किरीत्यादि स्वाहान्त अक्षर २५ । अस्याधिष्ठातार कल्पेन्द्रा दश, भवनपतीन्द्रा विंशति , व्यन्तरेन्द्रा द्वात्रिंशत् ज्योतिष्केन्द्रौ द्वौ षोडशविद्यादेव्य चतुर्विंशतियक्षाश्चतुर्विंशति शासनदेव्यश्च । तपोविधिस्त्वयम—

मोणेण सुरहिदव्व च्चियगोयमतप्परेण तिसञ्झ ।
झाण इत्थिअदसणमतपए सोलसायामा ॥१॥

आयामा इति आचाम्लानि । अय मन्त्रराज[ ] पूर्वोक्ताना पीठाना स्वामी । मेरुशब्देन आर्हन्त्यम् । अस्य लक्षजाप । होमो नास्ति। एतल्लक्षजापात् प्रत्यक्षो गौतम सूरिर्भवति।

शिष्यलब्धि[ः] भवति उपासकानां धनकुटुम्बवृद्धिः। सिति(त)ध्यानेन मासं यावच्चक्रमुद्रया जपेत् प्रत्यनीकक्षयः। एतान्येव पञ्चविंशतिअक्षराणि कुङ्कुम–चन्दन–कस्तूरीभिः कांस्यपात्रे विलिख्य प्रतिदिनमष्टोत्तरशतं १०८ जापः पूजा च दिन २१ यावत्। क्षुद्रदैवतविहितरोगोपद्रवनिवृत्तिः। अथवा सर्वं फलम्।

इति पञ्चमपीठवक्तव्यताधिकार[ः] षष्ठः ॥

इह च प्रथमपीठे मतिज्ञानम्, द्वितीये श्रुतज्ञानम्, तृतीयेऽवधिज्ञानम्, चतुर्थे मनःपर्यवज्ञानम्, पञ्चमे पीठे स्मर्यमाणे केवलज्ञानमुन्मीलतीति वृद्धाः ॥ छ ॥ ६ ।

अथ पञ्चपीठमयसंपूर्णसूरिमन्त्रवक्तव्यतासप्तमोऽधिकारः प्रस्तूयते—स चायं पञ्चपीठोऽप्ययं सूरिमन्त्रः परमेष्ठिमुद्रया श्वेतध्यानेन लक्षमानो जापः कार्यः–१००००० स्मरणीयः। सर्वोत्कृष्टा सिद्धिर्भवति। लीलयाऽप्युक्तं सत्यमेव भवति तथा यदा मरक-रोग-धाटीपौनःपुण्य(न्य)दोषादिकं उत्पन्नं नाशयितुमिष्यते, अभूतस्य चानुत्पत्तिरिष्यते तदा चान्दनेन रसेन कर्पूरेण स्थालं लिप्यते। छायाशुष्कं क्रियते। तत्र च द्वादशप्रतोलीप्राकारत्रयादिरूपं यथागमं समवसरणं जातीलेखिन्या उत्कीर्यते। तन्मध्ये च नाभेयमूर्त्तिश्चैत्यद्रुमादि यथागमश्रुतविस्तारयुग् लिख्यते। तदासनाधस्तात् सकुटुम्बोऽमुकोऽमुकग्रामेऽमुकस्त्रीत्यादि यथाकार्यं अक्षराणि चोत्कीर्यन्ते। तत्र स्थाले १०८ पुष्पैः सूरिमन्त्रं समग्रं जपेत्। अथ तत् स्थालं बृहत्कुण्डिकादौ त्रिगढीउपरि धृत्वा मन्त्रं भणद्भिरष्टोत्तरशतकलशैः स्नात्रं क्रियते समवसरणप्रतिमायाः। अथ तत् पुष्प–जल–चन्दनादि एकत्र गर्गर्यादौ कृत्वा मरकाद्याक्रान्ता नृ–तिर्यञ्चः पाय्यन्ते, आच्छोट्यन्ते, सर्वं सुस्थीस्यात्। तथा प्रातश्चतुर्दिशं ऊर्ध्वर्जुमन्त्रमेतं अञ्जलियोजनापूर्वं सकलं भणेत्, एकैकवारम्। प्रतिदिशं जनाकृष्टिः, तथा दीपोत्सवदिने उपोष्य आचाम्लं वा कृत्वा जापं प्रारभेत, शतपत्रीपुष्पैर्गरुडाक्षतैर्वा १०८ जापं कुर्यात् प्रत्यहं दिन २१ यावत्। किञ्चिद्भिग्रहं कुर्यात्। वत्सरं यावत् ऋद्धिवृद्धिः स्यात्। स्वस्य श्रावकाणां च तानि पुष्पाणि अक्षतांश्च स्वान्तिके धारयेत्। इष्टाय दद्याद् महाश्रीभराय। एकविंशे दिने जापे पूर्णे पूर्वोक्तानां पञ्चपीठाधिष्ठायिकानां सरस्वती १, त्रिभुवनस्वामिनी १, गणिपिटक १, विजया १, जया १, जयन्ती १, नन्दा १, भद्रा १, लक्ष्मी १, इन्द्र ६४, विद्यादेवी १६, यक्ष २४, यक्षिणी २४ एवम् १३७। तथा गौतम १, क्षेत्रपाल १, गुरुपाद(दु)का १, एवम् १४०। मोदकनैवेद्यं कर्पूरादिपूजा। एवं वर्षं प्रति कृते ऋद्धिवृद्धिर्गच्छस्य। तथा सर्वत्र स्मरणायां आत्मानं मेरुचूलासिंहासनस्थाष्टदलाब्जकर्णिकास्थं प्रवचनमुद्रानिषण्णं छत्रचामरेन्द्रादिऋद्धिमन्तं गौतममेव चिन्तयेत्। ऐश्वर्यलाभः। तथाऽब्दवर्षाभावे गोमयगोमुखं कारयेत्। तदन्तश्चान्दनं प्राकारं कारयेत्, तदन्तर्गौतमं सिंहासनादिश्रीमन्तं चिन्तयेत्। मन्त्रस्मरणां कुर्यात् वार १०८। मन्त्राक्षराणि तत्र विवक्षितदङ्गादौ दुग्धममृतं क्षरन्ति। स्थानमिदं

प्राकारत्रयमयसमवसरणमध्यगतमुपरि पतता गोदुग्धेन अमृतेन वा परिप्लाव्यते। इति ध्यानं दध्यात्। मण्डयितुरुर्वी सेसिच्यत इति। तथाऽर्हत सुधासारवर्षिछत्रत्रयतले पद्मासनेनार्हद्दृष्टौ आत्मान निविष्टं संकल्प्य सूरिमन्त्रं स्मरत परमैश्वर्यलाभ ।

इति पञ्चपीठमयसपूर्णसूरिमन्त्रवक्तव्यताधिकार' सप्तम ॥ ७ ॥

अथ विस्तरदेवताश्मरविधिवक्तव्यताऽधिकार प्रस्तूयते–तद्यथा–इह स्तोकजलकृत स्नान शुचिअव्यङ्गवस्त्रैरीर्यापथिकीं प्रतिक्रम्य प्राच्या पद्मासनस्थ सूरि पुरो देवतावसरझोलिका धृत्वा देवतावसरमारभेत॥ तत्र विंशतिरधिकारा । तथाहि—भूमिशुद्धि १, अङ्गन्यास २, सकलीकरणम् ३, हृदयशुद्धि ४, स्नानम् ५, कल्मषदहनम् ६, पञ्चपरमेष्ठिस्थापनम् ७, देवतावसरपूजा ८, आवाहन९–स्थापना१०–संनिधान११–सनिरोध१२–अवगुण्ठन१३–छोटिका १४–अमृतीकरणम् १५, जाप १६, क्षोभणम् १७, क्षामणम् १८, विसर्जनम् १९, स्तुति २०–एतानधिकारान् क्रमेणाह—

"ॐ भूरसीभूलधात्री सर्वभूतहिते भूमिशुद्धिं कुरु कुरु स्वाहा" इति मन्त्रेण सूटपा[ ] त्रिर्वासक्षेपे भूमिशुद्धि ॥ १ ॥

हृत्कण्ठतालु–भ्रू–मध्येब्रह्मरन्ध्रेषु यथाक्रमम् "ह्रीं ह्रीँ ह्रूँ ह्रां ह्रौँ" चिन्तयेत् त्रि इत्यङ्गन्यास । वामकरं तत्र न्यस्येदित्याम्नाय ॥ २ ॥

क्षि पीतवर्णं जानुनो , प स्फटिकवर्णं नाभौ, ॐ रक्तवर्णं हृदये, स्वा नीलवर्णं मुखे, हा इति मृगमदं वर्णं भाले–एतदेव हा स्वा ॐ प क्षि इति विपरीतत्वम् । एतत् त्रि सकलीकरणम् ।३।

"ॐ विमलाय विमलचित्ताय ज्वीं क्ष्वीं स्वाहा" इति मन्त्र भणन् वामहस्त हृदि न्यसेदिति हृदयशुद्धिस्त्रि ॥ ४ ॥

"ॐ अमलविमले सर्वतीर्थजलेप पा पा वा वा अशुचि शुचिर्भवामि स्वाहा" इति कराभ्या योजिताभ्या पञ्चाङ्गस्नानं त्रि ॥ ५ ॥

इतरेतर कराभ्या भुजामभ्यस्पर्शनपूर्वं "ॐ विद्युत्स्फुलिंगे महाविद्ये सर्वकल्मष दह दह स्वाहा" अनेन कल्मषदहन त्रि ॥ ६ ॥

'ॐ ॐ नम' इति मन्त्रेण संवृतदेवतासरे वामक्षेपात् त्रि सामान्यार्थं । ततश्छोटयेत् । ततो मणिपञ्चके पञ्चपरमेष्ठिस्थापना एकवारम् । अत पर सर्वमप्येकैकवारं भविष्यति ॥७

सप्रणवै पञ्चभि पीठै स्वाहास्थाने नमोऽन्तै कर्पूरादिपूजा, पूजाकाले नम , जापकाले स्वाहा इति वचनात् । इति देवतावसरपूजा ॥८

मध्यमणौ आर्हन्त्यरूपे *'ॐ क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसंपन्न ! अत्र समव*सरणस्थसहस्रपत्रकनक कमले एह्येहि संवौषट' इति मन्त्रेण आवाहनमुद्रया गौतम हृत्पद्मादन्तर्नाडीपथेनाकृष्य ब्रह्मरन्ध्र नीत्वा ज्योतिर्मय आह्वयेद् इत्यावाहनम् । इह च गौतम

सप्तकरोच्चं स्वर्णवर्णं सिंहासन-चामर-छत्रामरपरिकरादिश्रीमन्तं प्रवचनमुद्रास्थं साक्षादागतमिव कल्पयेदिति गुर्वाम्नायः । उत्तरत्रापि यत्रावाहना तत्र हृत्पद्मादानयनं पूर्वोक्तपद्धत्यैव वाच्यम् । विवक्षितदैवतस्वरूपं च विचिन्त्यमिति ॥९

'आं क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसंपन्न ! अत्र समवसरणस्थसहस्रपत्रकनककमले तिष्ठ तिष्ठ ठः ठः' इति मन्त्रेण स्थापनीमुद्रया स्थापना ॥१०

संनिधानीमुद्रया 'आं क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसपन्न ! मम संनिहितो भव वषट्' इति संनिधानम् ॥११

संनिरोधनीमुद्रया 'आं क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसंपन्न ! पूजान्तं यावदत्रैव स्थातव्यम्' इति संनिरोधः ॥१२

अवगुण्ठनमुद्रया 'आं क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसंपन्न ! परेषामदीक्षितानामदृश्यो भव' इत्यवगुण्ठनम् ॥१३

विघ्नत्रासनार्थं ऋ ॠ ऌ ॡः वर्जैर्द्वादशभिः स्वरैः षट्सु दिक्षु प्रतिदिशं द्वाभ्यां द्वाभ्यां स्वराभ्यां छोटिका । अङ्गुष्ठात् तर्जनीमुत्थाप्य छोटिकां दद्यादित्याम्नायः ॥१४

अधोमुखधेनुमुद्रया अमृतं क्षरन्त्या गौतमं सजीवीकुर्यादित्यमृतीकरणम् ॥१५

'आं क्रों ह्रीं श्रीं भगवन् गौतम ! सर्वलब्धिसंपन्न ! गन्धादीन् गृह्ण गृह्ण नमः' । इति पूजाग्राहणम् ॥

अथ सर्वेषां सूरिमन्त्राधिष्ठायकानां आवाहनादीन् पूजाग्राहणपर्यन्तानष्टाधिकारान् कुर्यात्, तद्यथा—'आं क्रों ह्रीं श्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायका अत्रागच्छन्तु संवौषट्' इति आवाहनीमुद्रया आवाहनम्, हृत्पद्मादानयेत् प्राग्वत् ॥१

'आं क्रों ह्रीं श्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायका अत्र तिष्ठन्तु ठः ठः' इति स्थापनामुद्रया स्थापना ॥२

'आं क्रों ह्रीं श्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायका मम संनिहिता भवन्तु वषट्' इति संनिधानीमुद्रया संनिधानम् ॥३

'आं क्रों ह्रीं श्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायकाः पूजान्तं यावदत्रैव स्थातव्यम्' इति संनिरोधनीमुद्रया संनिरोधः ॥४

'आं क्रों ह्रीं श्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायकाः परेषामदृश्या भवन्तु' इत्यवगुण्ठनमुद्रयाऽवगुण्ठनम् ॥५ छोटिका प्राग्वत् ॥६

अधोमुखधेनुमुद्रया अमृतं क्षरन्त्याधिष्ठायकानां सजीवतापादनममृतीकरणम् ॥७

ततोऽधिष्ठायकानां नामग्राहपूर्वकं पूजाग्राहणम् ॥८

तद्यथा—'आं क्रों ह्रीं श्रीं विद्यापीठप्रतिष्ठिता गौतमपदभक्ता देवी सरस्वती पूजां प्रतीच्छतु स्वाहा' इति मन्त्रं अञ्जलिमुद्रयोच्चार्य पूर्वमणौ विद्यापीठेन आदौ सप्रणवेन स्वाहास्थाने नमोऽन्तेन वासक्षेपः ॥१

'आं क्रों ह्रीं श्रीं विद्यापीठप्रतिष्ठिता मानुषोत्तरशिखरनिवासिनी सहस्रभुजा देवी त्रिभुवनस्वामिनी पूजां प्रतीच्छतु स्वाहा' इत्यञ्जलिमुद्रयोच्चार्य याम्यमणौ विद्यया उपूर्वया स्वाहास्थाने नमोऽन्तया वासक्षेपः ॥२

'आं क्रों ह्रीं श्रीं मन्त्रपीठप्रतिष्ठितः षोडशसहस्रयक्षस्वामी अतुलबलो विंशतिभुजो गणिपिटकयक्षराजः पूजां प्रतीच्छतु स्वाहा' इत्यञ्जलिमुद्रयोच्चार्य पश्चिममणौ मन्त्रपीठेन उपूर्वेण स्वाहास्थाने नमोऽन्तेन वासक्षेपः ॥३

'आं क्रों ह्रीं श्रीं उपविद्याप्रतिष्ठिता पद्महृदनिवासिनी चतुःषष्टिसुरेन्द्रमनोमोहिनी सर्वाङ्गभूषणधरा जया-विजया-जयन्ती-नन्दा-भद्रासमन्विता श्रीदेवी पूजां प्रतीच्छतु स्वाहा' इत्यञ्जलिमुद्रयोच्चार्य उदग्मणौ उपविद्यया उपूर्वया स्वाहास्थाने नमोऽन्तया वासक्षेपः । अत्राम्नायः-श्रीदेवी स्वर्णाभरणभूषिता पुर श्रेणीस्थनवनिधाना ध्यायते । स्वस्य परस्यापि श्रीर्भवति ॥ ४

'आं क्रों ह्रीं श्रीं मन्त्रराजप्रतिष्ठितो वज्रपाणिरैरावणवाहनः सौधर्मेन्द्रः शक्र', शूलपाणिर्वृषभवाहनः ऐशानेन्द्र ईशान', चक्रपाणिः सनत्कुमारेन्द्रः श्रमणः माहेन्द्राधिपतिर्महेन्द्र', बहुशस्त्रो ब्रह्मलोकेन्द्रः सौमनस', षष्ठ-सप्तमा-ऽष्टमकल्पेन्द्रा लान्तकमहाशुक्र-सहस्रारा', आनत-प्राणताधिपतिः प्राणतेन्द्रः, आरणाऽच्युताधिपतिरच्युतेन्द्र इति दश वैमानिकेन्द्राः । असुरकुमारेन्द्रौ चमरबली, नागकुमारेन्द्रोऽष्टकुलनागराजः सहस्रफणो धरणेन्द्रो भूतानन्दश्च, विद्युत्कुमारेन्द्रौ हरिकान्त-हरिस्सहौ, सुपर्णकुमारेन्द्रौ वेणुदेव-वेणुदारिणौ, अग्निकुमारेन्द्रौ अग्निशिखा-ऽग्निमाणवकौ, वायुकुमारेन्द्रौ वेलम्बन-प्रभञ्जनौ, स्तनितकुमारेन्द्रौ सुघोष-महाघोषौ, उदधिकुमारेन्द्रौ जलप्रभौ, द्वीपकुमारेन्द्रौ पूर्णविशिष्टौ, दिक्कुमारेन्द्रौ अमितगति-अमितवाहनौ इति विंशतिर्भवनपतीन्द्राः । पिशाचेन्द्रौ काल-महाकालौ, भूतेन्द्रौ सुरूप-प्रतिरूपौ, यक्षेन्द्रौ पूर्णभद्र-माणिभद्रौ, राक्षसेन्द्रौ भीम-महाभीमौ, किन्नरेन्द्रौ किन्नर-किंपुरुषौ, किंपुरुषेन्द्रौ सत्पुरुष-महापुरुषौ, महोरगेन्द्रौ अतिकाय-महाकायौ, गन्धर्वेन्द्रौ गीतरति-गीतयशसौ । अप्रज्ञप्तेन्द्रौ संनिहित-समानौ, पञ्चप्रज्ञप्तेन्द्रौ, धातृ-विधातारौ, ऋषिवादितेन्द्रौ ऋषि-ऋषिपालकौ, भूतवादितेन्द्रौ ईश्वर-महेश्वरौ, क्रन्दितेन्द्रौ सुवत्स-विशालौ, महाक्रन्दितेन्द्रौ हास-हासरती, कूष्माण्डेन्द्रौ श्वेत-महाश्वेतौ, पवकेन्द्रौ पवक-पवकपती इति द्वात्रिंशद्व्यन्तरेन्द्राः । ज्योतिष्केन्द्रौ चन्द्र-सूर्यौ इति चतुःषष्टिसुरेन्द्राः । तथा रोहिणी प्रज्ञप्ती वज्रशृङ्खला वज्राङ्कुशा चक्रेश्वरी नरदत्ता काली महाकाली गौरी गान्धारी सर्वास्त्रा महाज्वाला मानवी वैरोट्याऽ-

च्छुप्ता मानसी महामानसी इति षोडश विद्यादेव्यः । तथा गोमुख-महायक्ष-त्रिमुख-ईश्वर-तुम्बुरु-कुसुम-मातङ्ग-विजयाजित-ब्रह्म-ईश्वर-कुमार-षण्मुख-पाताल-किन्नर-गरुड-गन्धर्व-यक्षेन्द्र-कुबेर-वरुण-भृकुटि-गोमेध-पार्श्व-मातङ्गा इति चतुर्विंशतिः शासनयक्षाः । तथा अप्रतिचक्रा-अजितबला-दुरितारि-काली-महाकाली-अच्युता-शान्ता-भृकुटि-सुतारा-ऽशोका- मानवी-प्रचण्डा-विदिता-ऽङ्कुशा-कन्दर्पा-निर्वाणी-बला-धारिणी-वैरोट्या-नरदत्ता-गान्धारी-कूष्माण्डी-पद्मावती-सिद्धाय(यि)काश्चेति चतुर्विंशतिशासनदेव्यश्च पूजां प्रतीच्छन्तु स्वाहा' इत्यञ्जलिमुद्रयोच्चार्य मध्यमणौ ॐपूर्वेण स्वाहास्थाने नमोऽन्तेन मन्त्रराजेन वासक्षेपः । वासग्रहणेन सर्वत्र कर्पूरादिपरिग्रहः । अत्राम्नायः—इन्द्रादीन् चतुर्धा चतुर्धा कल्पयित्वा चतसृष्वपि दिक्षु स्थापयेद् गौतमं परितः । सर्वं संकल्पविलसितमेतत् इति पूजाग्राहणम् ।

अथ सौभाग्यमुद्रया परमेष्ठिमुद्रया प्रवचनमुद्रया सुरभिमुद्रया-ऽञ्जलिमुद्रया च प्रत्येकं पञ्चपीठमय-संपूर्णसूरिमन्त्रजापः । आम्नायोऽत्र सौभाग्यमुद्रायां सर्वाणि लब्धिपदानि पीठानि च ह्रींपूर्वाणि स्वाहान्तानि तु पीठानि १। परमेष्ठिमुद्रायां ॐपूर्वाणि स्वाहान्तानि पञ्चपीठानि २ । प्रवचनमुद्रायां श्रींपूर्वाणि स्वाहान्तानि पञ्चपीठानि ३ । सुरभिमुद्रायां अञ्जलिमुद्रायां च यथावस्थितं श्रीअभयदेवसूरिक्रमागतं एकोनत्रिंशदधिकशतद्वयमिताक्षरं गुरुणा दत्तं मन्त्रं जपेत् । ततो निखिलमन्त्रं मन्त्रराजं वाऽष्टोत्तरशतवारं जपेत् ।

इति पूजाग्राहणप्रक्रियापूर्वकः षोडशो जापाधिकारः १६ ॥

ततोऽस्त्रमुद्रया आसनं [1]मनाक् चालयेदिति क्षोभणम् ।

ॐ आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत् कृतम् ।
तत् सर्वं कृपया देव ! क्षमस्व परमेश्वर ! ॥

इति क्षामणश्लोकपाठपूर्वं-'ॐ ह्रीं नमोऽस्तु भगवन् गौतम ! सर्वलब्धिसंपन्न ! पुनरागमनाय स्वस्थानं गच्छ गच्छ' । यः विसर्जनमुद्रया विसृज्य ब्रह्मरन्ध्रद्वारेण हृत्पद्मं प्रत्यानयेत्, ब्रह्मरन्ध्रादन्तर्नाडीपथेन ततोऽस्त्रमुद्रया क्षोभणं कृत्वा

ॐ आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत् कृतम् ।
तत् सर्वं कृपया देवाः ! क्षमध्वं परमेश्वराः ! ॥

इति पठित्वा 'ॐ ह्रीं सर्वेऽपि सूरिमन्त्राधिष्ठायकाः पुनरागमनाय स्वस्थानं गच्छन्तु यः' इति विसर्जनमुद्रया विसृज्य ब्रह्मरन्ध्रेणान्तर्नाड्या हृत्पद्मे तथैव दिग्भागस्थित्या चतुर्धा कल्पयित्वा प्रत्यानयेत् एतावता क्षोभण-क्षामण-विसर्जनानि सिद्धानि । 'सूरिमन्त्राधिष्ठायका-

१ कूचा ।

राधनार्थं करेमि काउ(सग्गं)' लोगस,(स्स) ४ सागरवरगंभीरायावत् इति रुद्रपल्लीया । एवं अधिकार १९॥

जापसमाप्तौ अकृतेऽपि विसर्जने स्तुतिपाठ । विसर्जनात् पश्चाद् वा स्तुतिपाठ । स्तुतिश्चेयम्–"पढमपए सुपइट्ठा विघाए सूरिणो गुणनिहिस्स" इत्यत 'किं चिंतामणि-कामधेणु' इत्यन्ता विंशतिगायाप्रमिता श्रीमानदेवाचार्यनिर्मिता स्तुतिः श्रीसूरिमन्त्रकल्पादव-सेया । इति सूरिमन्त्राधिष्ठायकस्तव । इति स्तुतिपाठद्वार विंश इति ।

इति विस्तरदेवतावसरविधिवक्तव्यता ।

अथ संक्षिप्तदेवतावसरविधिवक्तव्यताऽधिकार प्रस्तूयते, तद् यथा—

स्तोकजलकृतशौचः शुचिअव्यङ्गवसन ऐर्यापथिकीं प्रतिक्रम्य पूर्वाभिमुख पद्मासनस्थ पुरो देवतावसरझोलिका धृत्वा 'क्षिप ॐ स्वाहा' अक्षरै सकलीकरणं कुर्यात् त्रि । 'ॐ नमो अरिहंताणं उदरं रक्ष । ॐ नमो सिद्धाणं ललाटं रक्ष । ॐ नमो आयरियाणं शिरो रक्ष । ॐ नमो उवज्झायाणं कवच रक्ष । ॐ नमो लोए सव्वसाहूणं शस्त्रं रक्ष' इति मन्त्रेण कराभ्या तत्तदङ्गस्पर्शनेनात्मरक्षा कुर्यात् । 'ॐ नमो अरिहंताण ॐ नमो सिद्धाणं ॐ नमो आयरियाणं ॐ नमो उवज्झायाणं ॐ नमो लोए सव्वसाहूणं । ॐ नमो आगासगामीणं । ॐ नमो चारण-लद्धीणं । ॐ ह्रः क्ष नम अशुचि शुचिर्भवामि स्वाहा' इति मन्त्रस्नानं कृत्वा देवतासरं छोटयित्वा पञ्चपरमेष्ठिनो मण्डयेत् ।

अथ प्रथमं वासैर्भूमिपूजा कृत्वा ॐपूर्वेण स्वाहास्थाने नमोऽन्तेन विद्यापीठेन सरस्वत्यधिष्ठिते पूर्वमणौ वासक्षेप १ । ॐपूर्वया स्वाहास्थाने नमोऽन्तया विद्यया वासक्षेपस्त्रिभुवनस्वामिन्यधिष्ठिते याम्यमणौ २ । ॐपूर्वेण स्वाहा स्थाने नमोऽन्तेन मन्त्रपीठेन गणिपिटकयक्षराडधिष्ठिते पश्चिममणौ वासक्षेप ३ । ॐपूर्वया स्वाहास्थाने नमोऽन्तयोपविद्यया श्रीदेव्यधिष्ठिते उदग्मणौ वासक्षेप ४ । ॐपूर्वेण स्वाहास्थाने नमोऽन्तेन मन्त्रराजेन इन्द्र ६४–विद्यादेवी १६–यक्ष २४–यक्षिणी २४– अधिष्ठिते मध्यमणौ आर्हन्त्यरूपे वासक्षेप ५ ।

अथ सौभाग्यार्थं सौभाग्यमुद्रया, अधिष्ठायकाना सजीवतापादनार्थं सुरभिमुद्रया, कर्म-क्षयार्थं परमेष्ठिमुद्रया, क्षुद्रोपद्रवशान्त्यर्थं गरुडमुद्रया, शत्रुक्षयार्थं चक्रमुद्रया एकैकवारं सकल मन्त्रं स्मरेत् । नवरं सौभाग्यमुद्रायां ह्रींपूर्वाणि पीठानि । शेषमुद्राचतुष्टये ॐपूर्वाणि पीठानीति विभेद ।

अथ सकलमन्त्रं वार १०८ अथवा वार ५४ अथवा वार ३६ यथासमाधिस्मरणा कुर्याद् मन स्थैर्याय शिरसि हृदि नाभौ द्वादशकमले ध्यात्वा पत्रे पत्रे स्पृष्ट्वा एकैकं लब्धिपदं

चिन्तयेत् स्मरणां कुर्वन् अक्षरशुद्धिं अक्षरसंख्यां पीठानां आराधनाविधिं अधिष्ठातॄन् चिन्तयेत् गुरूपदेशं विस्मार्य शुकपाठं न कुर्यात्।

इति संक्षिप्तदेवतावसरवक्तव्यता नवमोऽधिकारः ९ ॥

अथ महिमवक्तव्यता प्रस्तूयते, तद्यथा—

एष सूरिमन्त्रः श्रीवीरेण गौतमाय एकविंशतिशताक्षरप्रमाणो दत्तः। तेन च द्वाविंशत्-श्लोकप्रमाणः कृतः। कालेन हीयमानो यावद् दुःप्रसहस्याष्टश्लोकप्रमाणो भावी न च पुस्तके लिख्यते आज्ञाभङ्गप्रसङ्गात्। यावन्मात्रश्च संप्रति वर्त्तते तावतः सर्वस्यापि लग्नवेलायां दाने इष्टलग्नांशस्तिष्ठति। अतो लग्नादर्वागपि पीठचतुष्कं दातव्यम्। इष्टलग्नांशे पुनश्चतुष्पीठ-प्रभोर्मन्त्रराजस्य पदानि देयानीति गुरवः प्राहुः। अस्य च प्रत्यक्षरविवरणं संप्रति कोऽपि न जानाति। गुरुमुखाल्लब्धाः कत्यप्याम्नायाः कल्पेऽस्मिन् लिखिता इति। अस्याराधकः सूरिः सूतकभक्तं मृतकभक्तं रजस्वलास्पृष्टभक्तं मद्यमांसाशिभक्तं न भुङ्क्ते। अन्येषां साधूनां उच्छि-ष्टाम्भः कणेनापि लग्नेन एतस्य भोजनं न कल्पते। तद्गच्छीयः सूरिस्तद्गच्छीयं सूरिं भुञ्जानं स्पृशतु। नास्ति दोपः। अन्यत्र दोपः॥

इति महिमवक्तव्यताऽधिकारो दशमः १० ॥

श्री मलधारिगच्छसूरिमन्त्रकल्पः आपुष्पदन्तं जीयात् ॥

अक्षरशुद्धिसंख्यामयीं उपनिषदम्—

प्रथमलब्धिपदे अक्षर ५, द्वितीये अक्षर ७, तृतीये अक्षर ९, चतुर्थे ९, पञ्चमे ८, षष्ठे ११, सप्तमे ९, अष्टमे १०, नवमे ८, दशमे ८, एकादशे ७, द्वादशे ७।

"जमियं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा" अक्षर १७॥ एवं प्रथमपीठे अक्षर ११५, द्वितीयपीठे अक्षर ३५॥ अथ किरि किरि कालि अक्षर ७, रि अक्षर ६, सि ६, हि ६, महा ६; एवं तृतीयपीठे अक्षर ३१॥ ॐ कि० ५, पि ४, सि ४, हि ४, इरिया ६; एवं चतुर्थपीठे अक्षर २३॥ ॐ कि० ५, पि ४, सि ४, हि ४, आयरिय ८ एवं पञ्चमपीठे अक्षर २५; एवंकारके अक्षर २२९। तथाहि ११५, ३५, ३१, २३, २५ एवंविधं शुद्धं मन्त्रं अधी-यानस्य स्मरतः सर्वसिद्धिः॥

इत्युपनिषदं अक्षरशुद्धिसंख्यामयीं सूरिः स्मरेत्।

समाप्तोऽयं सूरिमन्त्रविचारः॥ कृतिरियं श्रीमलधारिश्रीराजशेखरसूरीणाम्॥

# विभिन्नाम्नायकल्पादि ॥

सूरिमन्त्रमध्यगताम्नायः—

नित्यं कान्तं वज्रादित्याकारं भाले बालेन्दोर्लेखायुक्तं योगी ध्याये [द्] ह्रींकारम्, 'ॐ ह्रीँ ऐं श्रीं सौं क्लीं'पूर्वं श्रीगीदे( दें )वीदत्तं बालेन्दोः सूरेः षड्धीजम्। यः प्राज्यं राज्यं प्रज्ञां पुष्टिं वै दद्यात् ॥ छ ॥

गोरोचना-मनःशिला-जात्यकुङ्कुमं तमालपत्राणि-एतानि चत्वार्यौपधानि सममात्राणि सुरूपया कुलीनया अचुम्बितया उत्तराभिमुखनिषण्णया कन्यया पुष्यार्के पेषयेत्। तच्चूर्णं पुष्यार्के उपोषितेन आचाम्लस्थेन वा भोजनादर्वाग् वा मन्त्रेणाऽष्टोत्तरशतवारं सूरिणाऽभिमन्त्रणीयम्। स चायं मन्त्रः—

'ॐ नमो जिणाणं, नमो पण्णसमणाणं, नमो वेसवणस्स, नमो रयणचूडाए, नमो पुण्णभद्दमाणिभद्दाणं, नमो सव्वाणुभूईणं, नमो ! रयणुत्तरपुप्फचूलाणं, नमो अट्ठण्हवाईणं सिद्धि-संति-पुट्ठि-सिद्धाणुमय-सिद्धाणुवयाणं आणाइक्कमणिज्ज स्वाहा' अक्षराणि मन्त्रे ९२। अभिमन्त्रितं तच्चूर्णं गुटिकाः कुर्यात्। ताभिर्गुटीभिः पर्युषितोऽह्ना चन्द्रकलया वा वामकरानामिकया भालेऽधोमुखं तिलकं कुर्यात्। नर-नारी-राट्सर्वं स्ववसात्। यावत् सविशेषकस्तावत् क्ष्वेडं न क्रमते।

इति सूरिमन्त्रमध्यगताम्नायः ॥ श्री ॥

लब्धिफलप्रकाशककल्पः—

ॐ नमो अरिहंताणं नमो जिणाणं ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः अप्रतिचक्रे फट् विचक्राय स्वाहा ॥ ॐ ह्रीं अर्हं अ सि आ उ सा ह्रीं ह्रां स्वाहा ॥ एतत् सर्वं प्रयोजनीयम्। विशूचिकाशान्तिर्भवति १। ॐ नमो अरहंताणं नमो जिणाण ह्रीँ। पु(पु)ष्प १०८ जपेत् ज्वरनाशनम् २। णमो परमोहिजिणाणं ह्राँ शिरो[रो]गनाशनम् ३। णमो सव्वोहिजिणाणं ह्राँ अक्षिरोगनाशनम् ४। णमो अणंतोहिजिणाणं कर्णरोगं नाशयति ५। णमो कुट्ठबुद्धीणं शूल गुल्म-उदररोगं नाशयति ६। णमो बीजबुद्धीणं श्वास-हिक्कादि नाशयति ७। णमो पदाणुसारीणं परैः सह विरोधं कलहं नाशयति ८। णमो संभिन्नसोयाणं कासं नाशयति ९। णमो पत्तेयबुद्धाणं प्रतिविद्याच्छेदनम् १०। नमो सयंबुद्धाणं कवित्वं पाण्डित्यं भवति ११। णमो बोहिबुद्धाणं अन्यतरगृहीते श्रुते एकसंघो भवति, ५२ दिनं यावज्जपेत् १२। नमो उज्जुमईणं शान्तिकं भवति, दिन २४ यावज्जपेत् १३। णमो विउलमईणं बहुश्रुतत्वम्, लवणाम्लवर्जं भोजनम् १४। णमो दसपुव्वीणं सर्वाङ्गवेदी भवति १५। णमो चउदसपुव्वीणं जापः १०८ स्वसमय-परसमयवेदी भवति १६। णमो अट्ठंगनिमित्तकुसलाणं जीवित-मरणादिकं जानाति १७। णमो

विउव्वणरिद्धिपत्ताणं काम्यवस्तूनि प्राप्नोति, दिन २८ जापः १८। णमो विज्जाहराणं उद्देश-प्रदेशमात्रं खे गच्छति १९। णमो चारणाणं चिन्तामुष्टिपदार्थस्वरूपं जानाति २०। णमो पु(प)ण्हसमणाणं आयुरवसानं जानाति २१। णमो आकासगामीणं अन्तरिक्षे योजनमात्रं गमयति २२। णमो दिट्ठिविसाणं स्थावर-जङ्गम-कृत्रिमविषं नाशयति २४। णमो उग्गतवाणं वाचां स्तम्भनम् २५। णमो दित्ततवाणं रविवाराद् दिनत्रिकं मध्याह्ने जापः सेनास्तम्भः २६। नमो तत्ततवाणं जलं परिजप्य पिबेद् अग्निस्तम्भः २७। णमो महातवाणं जलस्तम्भनम् २८। णमो घोरतवाणं विष-सर्पमुखरोगादिनाशः २९। णमो घोरगुणाणं लूतागर्भपिटिकादि नाशयति ३०। णमो घोरगुणाणं परक्कमाणं दुष्टमृगादीनां भयं नाशयति ३१। णमो घोरगुणब्रह्मचारीणं महाराक्षसादि नाशयति ३२। [३३ लब्धिपदं तत्फलं च किमिति न निर्दिष्टम्] णमो आमोसहिपत्ताणं सर्वानपमृत्यूनपहरति ३४। णमो जल्लोसहिपत्ताणं अपस्मारमवलेपं चित्त-विप्लवं नाशयति ३५। णमो विप्पोसहिपत्ताणं गजमारी शाम्यति ३६। णमो सव्वोसहिपत्ताणं मनुष्यमरकं नाशयति ३७। णमो मणबलीणं अश्वमारी शाम्यति ३८। णमो वचोबलीणं अजमारी शाम्यति ३९। णमो कायबलीणं गोमारी शाम्यति ४०। णमो अमयसवीणं समस्त-मुपसर्गं शमयति ४१। णमो सप्पिसवीणं एकाहिकद्व्याहिक-त्र्याहिक-चातुर्थिक-पाक्षिक-मासिक-सांवत्सरिकवातादिसमस्तज्वरं नाशयति ४२। णमो खीरसवीणं गोक्षीरं परिजप्य पिबेत् दिन २४ क्षयं कासं गण्डमालादिकं च नाशयति ४३। णमो अक्खीणमहाणसाणं आकर्षणम् ४४। णमा लोए सव्वसिद्धायदणाणं राजपुरुषादिवश्यम् ४५। ॐ नमो भगवदो महदि महा-वीरवड्ढ(ड्ढ)माणबुद्धिरिसीणं चेतःसमाधिमवस्थायां प्राप्नोति ४६।

इति लब्धिपदफलप्रकाशकः कल्पः ॥ ठ ॥

'ॐ नमो सामण्णकेवलीणं' एतल्लब्धिपदफलम्

'ॐ नमो सामण्णकेवलीणं स्वाहा' एतल्लब्धिपदं रक्तध्यानेन पद्मासनेन विद्रुमाक्षमालया अष्टोत्तरसहस्रं जपेद् रजनौ। जापानन्तरं न केनापि समं वदेत्। लघुनिरोधमपि न कुर्यात्। यं कमपि संदिग्धं अर्थं मनसिकृत्य (सु)शुचिरव्यङ्गवसनः श्रस्तरे शेते तस्यार्थस्य निश्चयं कश्चित् स्वप्ने आगत्य वदति। अथवा कश्चित् कञ्चिदर्थं याचितो न दत्ते, तमनुकूलयितुं इदं लब्धिपदं अष्टोत्तरसहस्रं शुचिर्मौनी रक्तध्यानेन पद्मासनेन विद्रुमाक्षमालया जपेत्, यियाचि-षितपुरुषस्य तस्यां रजनौ स्वप्नो भवति। ततश्च इष्टलाभः। यत् किमपि चिन्त्यते तस्योपदेशः संपद्यत इति तत्त्वम् ॥ छ ॥

प्रणवमन्त्रस्मरणफलम्—

हरिन्मणिवर्णं प्रणवं भ्रूयुगान्तरे यः स्मरेत् अष्टोत्तरं शतं अष्टोत्तरसहस्रं वा अधिकं वा तस्य सद्योलाभ इति ॥ पूर्वाभिमुखोऽव्यङ्गवसनो विद्रुमजपमालया रक्तध्यानेन निशीथे

यदेतत् संपूर्णं सूरिमन्त्रं १०८ वारं जपेत् तदाऽहोरात्रमध्ये विवक्षित ईश आकृष्ट इवायाति ।।छ।।

अञ्चलगच्छसूरिमन्त्राम्नायः—

ॐ ह्रीं नमो अरिहंताणं । ॐ ह्रीं नमो सिद्धाणं । ॐ ह्रीं नमो आयरियाणं । ॐ ह्रीं नमो उवज्झायाणं । ॐ ह्रीं नमो लोए सव्वसाहूणं । पदवर्ण ४५ । ॐ ह्रीं नमो भगवओ अर[हं]-तस्स महइ महावीरवद्धमाणसामिस्स । सिज्झउ मे भगवई महइ महाविज्जा ४२ । ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजये जयंते अपराजिए अणिहए ॐ ह्रीं स्वाहा ४४ ।। एवं अक्षर १३१ इति वाचनाचार्यमन्त्र । प्रवर्तिन्या अपि एष एव मन्त्र ।

श्रीमदञ्चलगच्छाम्नाय ।।

नान्दीपद ५ सत्काक्षर ४५ युक्तमन्त्राक्षर ८६ सयोगे संख्या १३१ ॥ उक्तं च,

नन्दीपएसु पचसु पणयालीस हवंति किर वन्ना ।
मंतक्खरछासीई इगतीसहिय सय सव्वे ।।१।।

प्रथमपीठलब्धिपदाक्षरसंख्या—

अर्हम ।। श्रीसूरिमन्त्रे श्रीचन्द्रवाचनाया सप्तमेरुयुक्ताया पञ्चपीठानि । तत्र प्रथमपीठे लब्धिपदानि षोडश । तत्र प्रथमे पद अक्षर ५, द्वितीये ७, तृतीये ९, चतुर्थे ८, पञ्चमे ९, षष्ठे ११, सप्तमे ६, अष्टमे ९, नवमे १०, दशमे ९, एकादशे ७, द्वादशे १०, त्रयोदशे ७, चतुर्दशे ७, पञ्चदशे १५, षोडशे १४–एवं लब्धिपदेषु अक्षर १४३ । तत 'एएसिं सव्वेसिं' इत्यादि 'पसिज्झउ' पर्यन्तं अक्षर २९ । एव प्रथमपीठे अक्षर १७२ । अत्र कर्मक्षयार्थं लब्धि-पदानि पीठानि च परमेष्ठिमुद्रया निर्मुद्रं स्वप्रणव-ह्रीं-श्रीरहितानि केवलान्येव स्मरेदित्या-म्नायात् । बीजाक्षररहिता लब्धिपदाक्षरसख्या उक्ता ।।

इति प्रथमं विद्यापीठम् ॥

द्वितीयपीठे—'ॐ नमो भगवओ' इत्यादि 'विज्जा' यावत् अक्षर ३३–एषा बाहुबलीविद्या स्वप्नार्थम् । तत 'वग्गु वग्गु' इत्यादि 'महुमहुरे' यावत् अक्षर २२–एषा सौभाग्यविद्या । ततो 'हिलि हिलि किलि किलि' इत्यष्टाक्षराणि अन्यत्रानुक्तान्यपि स्वगुरूक्तत्वाद् भणितानि । तत 'इरि कालि'इत्यादि 'आयरिय कालि' यावत् अक्षर ३० । एवं द्वितीयपीठे अक्षरसर्व-संख्या ९३ ।

इति द्वितीयमहाविद्यापीठम् ।।

तत तृतीये उपविद्यापीठे—'इरियाए' इत्यादि 'कालि महाकालि' यावत् अक्षर ३५ ।।

इति तृतीयं पीठम् ।।

चतुर्थं तु मन्त्रपीठम्—तत्र 'इरि इरि कालि' इत्यादि 'आयरिय आयरिय कालि' यावत् अक्षर ४६॥

इति चतुर्थं पीठम्

पञ्चमं मन्त्रराजपीठम्—तत्र 'इरि मेरु' इत्यादि अक्षर ३० स्वाहासहित ३२। एवं सकल-श्रीसूरिमन्त्रे अक्षर ३७८ श्लोक ११ अक्षर २६ ॥

इति श्रीअञ्चलगच्छे श्रीसूरिमन्त्राम्नायः चिरं नन्दतु ॥

अथ श्रीउपाध्यायमन्त्रः—ॐ नमो अरिहंताणं। ॐ नमो सिद्धाणं। ॐ नमो आयरियाणं। ॐ नमो उवज्झायाणं। ॐ नमो सव्वसाहूणं ३८। ॐ नमो ओहिजिणाणं ॐ नमो परमोहिजिणाणं ॐ नमो सव्वोहिजिणाणं। ॐ नमो अणंतोहिजिणाणं। ॐ नमो अरिहओ भगवओ महावीर-वद्धमाणसामिस्स सिज्झउ मे भगवई महइ महाविज्जा ७४। वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजए जयंते अपराजिए अणिहए। ॐ ह्रीं स्वाहा ४३ ॥

[एष] उपाध्यायमन्त्रः। श्रीमहत्तराणामप्येष मन्त्रः। सर्वाक्षर १५५।

अडतीसं परमिट्ठीपएसु, नंदीपएसु चउसत्त।
विज्जक्खर तिगचउरो, पणवन्नहियं सयं सव्वे ॥ १

अर्हं ॥ श्रीसूरिमन्त्रपटलेखनविधिः—

श्रीसूरिमन्त्रपटे सप्तवलयानि। तत्र प्रथमवलये चतुर्विंशतिकोष्टकाः। तेषु चतुर्विंशति-श्रीजिनेन्द्राः। द्वितीयवलये अष्टादशकोष्टकाः। तत्र कोष्टकषोडशके षोडशलब्धिपदानि। सप्त-दशकोष्टके 'सा मे विज्जा पसिज्झउ स्वाहा' ॥ विज्जाणं पीठं। एवमस्मिन् द्वितीयवलये अष्टा-दशकोष्टकेषु मुख्यमन्त्राक्षरसर्वसंख्या १९० 'विज्जाणं पीठं' इति पीठनाम। तथा तृतीयवलये एकादशकोष्टकाः। तेषु प्रथमे—ॐ श्रीइन्द्रभूतये नम। द्वितीये ॐ श्रीअग्निभूतये नमः। तृतीये ॐ श्रीवायुभूतये नमः। चतुर्थे ॐ श्रीव्यक्ताय नमः। पञ्चमे ॐ श्रीसुधर्माय नमः। षष्ठे ॐ श्रीमण्डितपुत्राय नमः। सप्तमे ॐ श्रीमौर्यपुत्राय नमः। अष्टमे ॐ श्रीअकम्पिताय नमः। नवमे ॐ श्रीअचलभ्रात्रे नमः। दशमे ॐ श्रीमेतार्याय नमः। एकादशे ॐ श्रीप्रभासाय नमः। तथा चतुर्थवलये 'ॐ नमो भगवओ बाहुबलिस्स पन्हसमणस्स' इत्यादि 'आयरिय कालि स्वाहा' ॥ महाविद्यापीठम् ॥ १

अस्य वलये मुख्यमन्त्राक्षर ९७। महाविद्यापीठम् इति तु पीठनाम २ ॥

तथा पञ्चमवलये 'ॐ इरियाए किरियाए' इत्यादि 'कालि महाकालि स्वाहा' उपविद्या-पीठम् ३ ॥

जापः १२००० जात्यादिभिः पुष्पैर्जप्तोऽयं सारस्वतः ॥ छ ॥ अस्मिन् वलये 'स्वाहा' यावद् मुख्यमन्त्राक्षर ३८ ज्ञेयाः। ततो यदुपविद्यापीठं तत् पीठनाम। ततो यज्जापादि तद्-

लयपूरणाय, मन्त्राक्षरस्वपरज्ञापनाय च ज्ञेयम् । तथा षष्ठवलये 'उ इरि इरि कालि किरि किरि कालि' इत्यादि 'आयरिय आयरिय कालि स्वाहा' । मन्त्रपीठम् ४ ॥ छ ॥

अस्मिन् वलये मुख्यमन्त्राक्षर ४९ । मन्त्रपीठं इति तु पीठनाम ॥ तथा सप्तमवलये 'उ इरि मेरु किरि मेरु' इत्यादि 'आयरिय मेरु स्वाहा' ॥ मन्त्रराजः ५ ॥

जापः १००००० ॥ अस्मिन् वलये मुख्यमन्त्राक्षर ३३ । ततो मन्त्रराज इति पीठनाम । ततो जापप्रमाणं वलयोद्गरितस्थानपूरणाय, जापप्रमाणज्ञानाय च । तथा मध्ये सिंहासनोपरिस्थ-कमलोपविष्टा श्रीगौतमस्वामिमूर्तिः । मूर्त्तेरुपरि उभयतो गजेन्द्रावभिषेकं कुरुतः । मूर्त्ते-र्दक्षिणपार्श्वे 'उ ह्रीं श्रीं' इति मन्त्रराजाक्षरत्रिकलिखनम् । धामपार्श्वे तु 'शिवशान्तितुष्टि(पु)ष्टीः कुरु कुरु स्वाहा' इत्यक्षराणि लेख्यानि । तथा मूर्त्तेः परितः चतुर्दिक्षु चतुःषष्टीन्द्राणां षोडश विद्यादेवतानां चतुर्विंशतियक्षाणां चतुर्विंशतियक्षि(क्ष)णीनां च स्थापनाय चतुर्भागीकृता अङ्का न्यस्याः । यथा चतुर्दिक्षु षोडश–षोडशरूपोऽङ्को लिख्यते । सर्वमीलने चतुःषष्टिः । एवं सर्वत्र ।

एष सूरिमन्त्रपटलिखनविधिः ॥

सूरिमन्त्रपटालेखने अञ्चलगच्छाम्नायः—

तथा पटस्थपीठपञ्चकलिखित सकलमन्त्राक्षरसंख्या ४०७ माना विज्ञेया । तथा सप्त-मेरुयुक्तायां श्रीचन्द्रवाचनायां या सर्वाक्षरसंख्या अक्षर ३७६ प्रमाणा वर्त्तन्ते । तत्र प्रणवः, प्रतिपीठप्रान्ते स्वाहा चेत्यक्षराणि न गृहीतानि । तत्कारणं तत्र स्वयमेवोक्तमस्ति । अत्र च पटे यथार्हस्थाने प्रणवग्रहणान् प्रतिपीठप्रान्ते स्वाहाक्षरग्रहणाच्च अक्षरवृद्धिर्विज्ञेया । यदा तु अयं श्रीसूरिमन्त्रः पटे लेख्यते तदा अक्षर ४०७ मानो लेख्यः । यदा च श्रीचन्द्रवाचनायां तदा अक्षर ३७६ मानोऽयं ज्ञेयः, इति तत्त्वम् ।

इति श्रीमदञ्चलगच्छे श्रीसूरिमन्त्रपटलेखनाम्नायश्चिरं नन्दतात् । श्रीर्भवतात् ॥

श्रीमदञ्चलगच्छस्यायमाम्नायः ॥

वाचनाचार्यमन्त्रश्चायम्—"उ ह्रीं नमो अरिहंताणं ५ ॥ उ नमो अरिहंताणं । नमो सिद्धाणं । नमो अणंतजिणाणं । नमो सिद्धजोगधराणं । नमो सव्वेसिं विज्जाहरपत्ताणं । कयंजली इमं विज्जारायं पउंजामि । इमा मे विज्जा पसिज्झउ आरकालि थालकालि पंसु-सुरररेओ आय तवो चडि स्वाहा" । सत्तरुक्कराओ भूमीओ घित्तूण कियाणकोपरि ध्रियन्ते । लघुविकाइ कुल्मीपत्ताइं सत्ताभिमंतिऊण कन्ने कीरंति जं मग्गइ तं लहइ । सत्ताभिमंतिओ कुमारी सुत्तदोरओ हत्थे बंधिउं कुवियं पसीयइ । घरकक्कराओ सत्त घित्तूण सत्त वारा जावियाहिं गावीसु नही वा आहम्मइ चट्टु गम्मइ तिल्लं जविऊण अरिउमक्खिज्जइ सज्जो हवइ । सप्पदट्ठस्स पाणीयं सत्ताभिमंतियं पाइज्जइ वि संजाइ । चूर्णिः ॥

"ॐ नमो भगवओ गोयमस्स गणहारिस्स अक्खीणमहाणसस्स सव्वाणं वत्थाणं सव्वाणं
पत्ताणं सव्वाणं वत्थूणं ॐ अक्खीणमहाणसिया लद्धी हवउ मे मे स्वाहा"। उपयोगवेलायां
नवं वा देयं वस्त्वभिमन्त्र्य देयम् ॥

मायावीजकल्पः-

ॐ सिद्धिः ॥ मायावीजाराधनविधिः षट्कर्मसु लिख्यते। तत्र त्रिधा शुद्धिः ब्रह्मव्रतः।
एकाशनविहितस्नानो विभूषिताङ्गः शुचिवसनः प्राङ्मुखः उत्तराभिमुखो वा स्थिरासने समु-
पविश्य 'ॐ भूरिसीभूतधात्री सर्वभूतहिते' भूमिशुद्धिः। 'ॐ अमले विमले०' अनेन मन्त्रेण
सर्वाङ्गस्पर्शनेन स्नात्रम्। 'ॐ विद्युत्फुलिंगे महा०' अनेन मन्त्रेण भुजमध्यस्पर्शनेन कल्मषं (ष)
दहनम्।

'ॐ अमलाय०' हृदयस्पर्शेन हृच्छुद्धिः। 'क्षिप ॐ स्वाहा। हा स्वा ॐ प क्षि' पञ्चाङ्गस्पर्श-
नेनाङ्गरक्षा। 'ॐ कुरु कुल्ले स्वाहा। हा स्वा ल्ले कु रु कु ॐ' सप्तस्थानस्पर्शनेन सकलीकरणम्।
तंविधि (धिं) समाप्य विद्वेषणचालनेषु 'हुं वोषडंतं फट्' इति प्रयोज्यम्, वश्ये 'वषट्'। वैरि-
वधे तथाऽद्ये 'स्वाहा'। 'सु(स्व)धा' शान्ति-पौष्टिकेषु।

स्फु(स्फ)टिकप्रवाल-मुक्ता-चामीकर-पत्रजीवकृतमणिभिः।
अष्टोत्तरशतं जाप्यं शान्त्याद्यर्थं करोति बुधः ॥१॥
मोक्षाभिचारशान्तिवश्याकर्षेषु योजयेत् क्रमशः।
अङ्गुष्टाद्यङ्गुलिकामण(णं) योऽङ्गुष्ठेन चाल्यन्ते(ते) ॥२॥
पूर्वान्हे(ह्ने) वश्यकर्माणि मध्याह्ने प्रीतिनाशनम्।
उच्चाटनं चापराह्णेऽपि सन्ध्यायां मारणं ध्रुवम् ॥३॥
शान्तिकर्माण्यर्धरात्र(त्रे) तु प्रभाते पौष्टिकं तथा।
वश्यमुक्तानि कर्माणि सव्यहस्तेन योजयेत् ॥४॥
१उदयार्क-२रक्त-३शशधर-४धूम-५हरिद्रा-ऽसिता वर्णाः।
आकृष्टि-वश्यता-शान्तिक-विद्वेषणाराधसमयेषु ॥५

एवं सर्वस्थितिं दत्त्वा चतुष्किकापदं वा सम्यक् प्रक्षाल्य रहसि आमघटोत्कीर्णं वा
ताम्रपत्रोत्कीर्णं कुङ्कुमस्वस्तिकोपरिगतं मायावीजं संस्थाप्य प्रथमकोणे 'गूङ्गणाधिपतये नमः'
इत्यक्षरन्यासपूर्वं गणपतिं पूजयेत्। द्वितीयकोणे 'ब्रूंबुटकनाथाय नमः' इति बुटकनाथपूजा।
तृतीयकोणे 'न्दुं दुर्गायै नमः' इति दुर्गापूजा इति चतुर्थकोणे 'क्षौं क्षेत्रपालाय नमः' इति क्षेत्र-
पालपूजा ॥

एवं सर्वाधिष्ठायकान् संपूज्य विहितदीपोद्बोधः। मायावीजोपरि नारजीयुजं धृत्वा

दीपशिखायां न्यस्तदृष्टिः जापं विदध्यात् । अन्तरान्तरा द्राक्षारसेन तर्पणां विधेयाम् । पट्टस्योपरि एवं प्रतिदिनं जापक्रमेण लक्षं यावत् परिपूर्य पूजासमाप्तौ दशांशेन होमः कार्यः ।

तस्यायं विधिः–वृत्तं कुण्डं मृन्मयं कृत्वा मध्ये षट्कोणयन्त्रसहितं वा ताम्रपत्रं स्थाप्य तु(त)न्दुल–शर्करा-दुग्धेन बदिरप्रमाणां गुटिकां कृत्वा होमयेत् । खदिरसमिधयो नवाङ्गुल विधेयाः । इत्येवं होमविधिः ॥

बन्दिमोक्षे शुक्लध्यानेन बुद्धिः (बद्धो) । परि अमृतवर्षं चिन्तयेत् । ॐ ह्रीं वषट् रक्तध्यानेन चिन्तयेत् । जगद्वशीकरणं(ण)सिद्धिः । ॐ ह्रीं विषद्वेषणे धूम्रध्यानेन ॐ ह्रीं फट् उच्चाटने कृष्णध्यानेन, ॐ ह्रीं संवौषट् आकर्षणे सन्ध्यारुणम् । ॐ ह्रीं स्वाहा शांतिके चन्द्रज्योत्स्ना। ॐ ह्रीं स्वधा पौष्टिके वल(उज्)ज्वलध्यानम् । ॐ ह्रीं घे घे मारणे कृष्णध्यान[म्] आरीठाजपमाली ॥ श्रीर्भवतु ॥

# परिशिष्टानि

## १. ह्रींकारकल्पः।

ह्रींकारस्य किं तत्त्वं वद कौतूहलं मम।
अधुना श्रोतुमिच्छामि मायाबीजस्य निर्णयम् ॥१
महाप्रश्नं त्वया पृष्टं देवानामपि दुर्लभम्।
ब्रह्मेन्द्र-विष्णु-दैत्यानामपि गुह्यं हि सुन्दरि! ॥२
न कस्यापि मयाऽऽख्या(ख्या)तं विना विष्णुं तु शोभने!।
यकाराद्दष्टमं बीजं बिन्दुभूषितमस्तकम् ॥३
चतुर्थस्वरसंयुक्तं रेफेणापि समन्वितम्।
एनं देवि! महामन्त्रराजानं परिकीर्तितम् ॥४
सहस्रदशजापेन भूताः सिद्ध्यन्ति नान्यथा।
प्रेता विंशतिना चैव वेतालाः त्रिंशता तथा ॥५
चत्वारिंशता पिशाचाः पञ्चाशद् यक्ष-राक्षसाः।
षष्ट्या सहस्रैर्गन्धर्वाः सप्तत्या किन्नराः स्फुटम् ॥६
अशीत्या हि सहस्रैश्च काव्यशक्तिः प्रजायते।
नवत्या च सुराः सर्वे सिद्ध्यन्त्यत्र न संशयः ॥७
लक्षजापेन हे देवि! इष्टसिद्धिः प्रजायते।
अतः परं वरो नास्ति मन्त्रविद्या वरानने! ॥८
एषा च परमा शक्तिर्मूलं च मयकोच्यते।
विष्णुनाऽप्यमुना लोको मायावीर्येण मोहितः ॥९
अस्य ध्यानतो नो किञ्चिद् यो जपेन्नित्यमेव हि
एकाग्रचित्तो नासाग्रन्यस्तदृष्टिः समाहितः ॥१०
स्थावरं जङ्गमं चैव यदुग्रं कथितं विषम्।
ज्वालागर्दभविस्फोटा वात-शीतलिकादयः ॥११

ज्वराश्च विविधा घोराः संनिपातास्त्रयोदश ।
वध-बन्धादयश्चान्ये सिंह-व्याघ्राश्च तस्कराः ॥१२
एते सर्वेऽपि शाम्यन्ति तमांस्यर्कोदये तथा ।
एतद् ध्यानं प्रवक्ष्यामि शृण(णु) देवेन्द्रवत्सले ! ॥१३
स्फटिकामलसंकाशं हिमपुञ्जेन संनिभम् ।
प्रणाशयेद् विषं क्षिप्रमोक्षश्चैव प्रजायते ॥१४
रक्तवर्णं च यो ध्यायेद् योनिमध्ये वरानने ! ।
आकर्षेत्युर्वशीरम्भामुख्या देव्यः किमु स्त्रियः ? ॥१५
अन्तःपुरनिवासा च राजपत्नी च या भवेत् ।
आनयेत न संदेहो वस्त्रालङ्कारभूषिताम् ॥१६
पीतवर्णं च यो ध्यायेत् कण्ठस्थं हृदि सुन्दरि ! ।
स्तम्भं क्षोभं विवादं वा विशेषं कुरुतेऽसकौ ॥१७
काकपक्षेण संकाशं शत्रूणां हृदये धृतम् ।
उच्चाटयेन्न संदेहो यदि शक्रसमो रिपुः ॥१८
नाभिप्रदेशे यो ध्यायेत् कृष्णरूपं वरानने ।
नरं तं मारयेन्नूनं यमतुल्यं यदा भवेत ॥१९
एतन्मर्म महागुह्यं प्रिये ! तुभ्यं वदाम्यहम् ।
कुदीक्षिते न दातव्यं दातव्यं च सुदीक्षिते ॥२०
दर्शनं दूषितं यस्य भुजके पापबुद्धिके ।
परद्रव्यरते हिंसा-परदोषपरायणे ॥२१
न दातव्यं च दातव्यं ब्रह्मचर्यदयारते ।
सर्वसिद्धिकरं ह्येतद् भुक्ति-मुक्तिप्रदायकम् ॥२२

[इति] ह्रींकारकल्पः [समाप्तः] ॥

[ह्रींकारविधिः]—

ॐ ह्रीं नम ॥ एषा ह्रींनामलेख्या विद्या । अस्या उपचारोऽयम् । कृष्णाष्टम्यां कृष्णचतुर्दश्यां वोपवासं कृत्वा श्रीपार्श्वनाथस्य महो(ह)तीं पूजां कृत्वा देवस्य दक्षिणबाहौ पद्मासनोपविष्टो द्वादशसहस्राणि जातिपुष्पैर्जपेत् । ततः सिध्यति । पश्चात् त्रिसन्ध्यं १०८ यो जपति सप्तभि-

र्दिनैर्ग्रन्थशतत्रयं गृह्णाति तथा जलं सप्ताभिमन्त्रितं काकेष्वलपत्सु षण्मासान् पिबति कविर्भवति सर्वशास्त्रवेत्ता च। सततजापेन सर्वजनप्रियः। मुद्रामञ्जलिं बद्ध्वा जपेच्चौरा बद्धाः स्युः। राजकुलं प्रविशन(ने) जपति राजप्रियः। अजारक्तेन यन्नाम लिखित्वा मानुषकपालं शलाकया विद्धं तापयेत् स वश्यः स्यात्। अलक्तेनाङ्गुष्ठं लिप्त्वा खड्गादर्शयोर्वा त्रिशूलहस्तां देवतामवतीर्णां पश्यति वाग्देवीं वाऽन्येषामपि दारक-दारिकाणं(णां) चतुःसप्ताभिमन्त्रितं कृत्वा खड्गादर्शे दर्शयेत् सर्वेऽपि पश्यन्ति। सर्वकर्म्मकरी विद्या॥

[२]

# नालिकेरकल्पः ॥

"ॐ ह्रीं श्रीं क्लीं क्लीं एकाक्षाय भगवते भूरूपाय सर्वयुगेश्वराय त्रैलोक्यनाथाय सर्वकाम-प्रदाय नम" ।

स द्विजटैकनेत्रस्य नालिकेरो महीतले ।
चिन्तामणिसमप्रोक्त सर्ववाञ्छितदायक ॥१॥

यश्चैत्राष्टम्या रक्तपुष्पै शत१०८लक्ष्मीबीजेन जाप । पुन पुन स्मरेत् । गृहे पून-यति तस्य सर्वाभीष्टार्थसिद्धि । तस्य नालिकेरस्य प्रक्षालनजलेन पीतेन वि(ब)न्ध्या पु‍त्र लभते । 'ॐ ह्रीं नम' अनेन मन्त्रेण प्रथमं नालिकेरं पूजयित्वा सर्वकुसुमै सर्वसुगन्धैश्च पश्चाद् द्वादशसहस्राणि तन्दुलानि जपित्वा एकवर्णा गौ गोदुग्धेन परमान्नं कृत्वा रतिस्नानाद-नन्तर भोजन कार्यम् । उपोषितं कृत्वा एतत् कार्यम् । एकमेवं भव्यतरं लागु(कु)लीफलं ढौक-येत् तस्यादीयते भग्न कृत्वा अपुत्राया वि(व)न्ध्या[या] पुत्रो भवति । परं रतिदिनत्रयेभ्य स्नानानन्तरम्, अस्य गन्धेन आघ्रातेन गूढगर्भा प्रसूते । एतस्य पूजनाद् लक्ष्मी स्थिरा जायते। एतस्य दीपालिकाया(या) प्रपूजनात् तस्य ग्रामे विवादे जिव (जय) स्यात् । एतस्य हट्टस्थापने व्यवसायलाभो वृद्धिः । एतस्य मायाबीजजाप । सर्वदी(दै)व दीपोत्सवे श्वे(श्वे)तपुष्पै जाप । पूजनात् पूजकगृहे सर्वोपद्रवाः प्रणि(ण)श्यन्ति । एतस्य पूजितस्य दर्शनात शाकिनी-भूत-पिशाचादिदोषास्तत्कालं नश्यन्ति । एतस्य पूजनात् गृहे केचन दुष्टमुद्गलास्तेऽपि शान्तिकरा भवन्ति । किं बहुधाऽस्यैकनेत्रो द्विजटी सपक्ष स नालिकेर कृतिनोऽस्ति गृहे चिन्तामणि प्रोक्त फलप्रभावात् सामान्यता(तः) धन्योत्तमः स्वोचित इति । एकनेत्रसारप्रयोगाद् ।

रि(ऋ)द्धिविधाता प्रसवस्य हेतुः जटी । दुर्नयरोगजेतादिकार्यः । कलिकल्पवृक्षो युगान्तरे किं धनमन्द(द)वीर्य । सर्वधनधान्यराजमान्यता गृहे लक्ष्मी भवति । उपसर्गा न भवन्ति । सर्वदु खस्योत्तारो भवति ।

नालिकेरकल्प समाप्त ॥ श्रीः ॥
श्रीगुणसमुद्रसूरिसद्गुरुभ्यो नम ॥

### श्रीजिनप्रभसूरिविरचितं

# वर्धमानविद्यास्तवनम् ॥

॥ अर्हं ॥

आसि किलट्ठुत्तरसयपयविन्नासो हुइज पीढंमि ।
तत्तो उद्धरियाओ वायगसिरिचिंदसेणेणं ॥ १ ॥
चउवीसाइजिणाणं विज्ञा एतासु जा चरमविज्ञा ।
सा वद्धमाणविज्ञा भन्नइ तस्सा थुवं काउं ॥ २ ॥
पणपरमिट्ठिपयाइं चत्तारि य थुयपयाइ घित्तूणं ।
उवज्झायकररन्ना जा विहिया....अवयरेहिं ॥ ३ ॥
जा विन्निहमंडलुद्धारवाइणा साहुणा फलविसेसा ।
दिप्पंति संपयाओ जे से जिणपवयणे बहवे ॥ ४ ॥
कल्लाणएसु पंचेसु वीरसामिणो कयविसेसतवविहिणो ।
आराहयंति रिसिणो हत्थुतराइनखत्तेसु ॥ ५ ॥
उववासमयणतेरसिदिणंमि अडहियसहस्सजावेणं ।
बारससहस्सजावे सिज्झइ जो वीरकल्लाणे ॥ ६ ॥
गरुडक्खएहिं सइवत्तणहं अडसयमीएहि पत्तेहिं ।
जविऊण ते सत्तदिणे पडोवरिं वीरबिंबे वा ॥ ७ ॥
तदुभयचुन्नविम(मि)स्सियवासक्खेवे कयंमि खीरदुमे ।
जा सिज्झइ ता वासा सिरिखित्ता निरुवसग्गकरा ॥ ८ ॥
जं सिरिऊण सिरं निवपूइयसे(सो)हग्गमाइया तासिं ।
दीहाइसाइणिसमं सुगइं च भवंतरे लहइ ॥ ९ ॥
अणुओगगणाणन्ना वयजोगपइट्ठअत्थसत्थेसु ।
जीए वासक्खेवो गुरुहिं किरइ अविग्घट्टं ॥ १० ॥

अक्खयवासजलेहिं जीए अरिसंमयं हरइ दोसं ।
भवियाण कुणइ ऋद्धिं आरोग्गं तह य वसकरणं ॥ ११ ॥
जा वद्धमाणविज्जा निरवि(व)ज्जा भगवओ य सिज्झाओ ।
मे कम्मखयस्स परमो हेउ इहलोइयफलाय ॥ १२ ॥
अक्खीण-धीय-कुट्ठे य विवाय-नृजय-समिणिआ एसा ।
संपावइ मत्ताणं विहिणा जविया इमा विज्जा ॥ १३ ॥
एयाइं विज्जाइं पभावओएण जस्स करि भव्वो ।
अणिगइ कल्लाणसुहं नित्थारपारगा होउ ॥ १४ ॥
पणवं हरियं तत्तं रत्तं कणयप्पहे य वियपएसे ।
तं सुक्कज्झाणेणं झायइ जो तस्स वरऋद्धी ॥ १५ ॥
जविऊण इमं विज्जं वारे इगवीस सम्ममवियन्नो ।
जो खलु पविसइ गामं कज्जं से सोहणं होइ ॥ १६ ॥
इय वद्धमाणविज्जा थवणं जो पढइ पइपभाइ भणं ।
सो हवइ जिणप्पहमइ मंगलकल्लाण आवासो ॥ १७ ॥

॥ इति वर्धमानविद्यास्तवनम् ॥

# प्रवचनमङ्गलसारस्तवः ॥

नमः श्रीप्रवचनाय ॥

अरिहंते नमिऊणं सिद्धे आयरिअसव्वसाहू अ ।
पवयणमंगलसारं वुच्छामि अहं समासेणं ॥१॥
पढमं नमह जिणाणं ओहिजिणाणं च नमह सव्वेसिं ।
परमोहिजिणे नमह य अणंतओहीजिणे नमह ॥२॥
सव्वोहिजिणे वंदे पणमह भावेण केवलिजिणे अ ।
नमह य भवत्थकेवलिजिणनाहे तिविहजोएणं ॥३॥
पणमह उज्जुमईणं विउलमईणं च नमह सव्वेसिं ।
पण्हासमणे पणमह नमह तहा बीयबुद्धीणं ॥४॥
पणमेह कुट्ठबुद्धी पयाणुसारीण नमह सव्वेसिं ।
पणमामि सुअहराणं पणमह संभिन्नसोआणं ॥५॥
पणमह चउदसपुव्वी तह दसपुव्वी अवायगे वंदे ।
इक्कारसंगसुत्तत्थधारए नमह आयरिए ॥६॥
चारणसमणे पणमह तह जंघाचारणे अ पणमामि ।
वंदे विज्जासिद्धे आगासगए अ जिणकप्पे ॥७॥
आमोसहिणो वंदे खेलोसहिजल्लमोसहे नमह ।
सव्वोसहिणो वंदे पणमह आसीविसे चेव ॥८॥
पणमह दिट्ठिविसिणो वयणविसे नमह तत्तलेसिल्ले ।
वंदामि सीअलेसे विप्पोसहिणो अ वंदामि ॥९॥
खीरासवाण नमिमो महुआसवयाण वंदिमो चलणे ।
अमयासवाण पणमह अक्खीणमहाणसे वंदे ॥१०॥
पणमामि विउव्वीणं जलहीगमणाण भूमिमज्जीणं ।
वंदामि अणुअरूवे महल्लरूवे पणिवयामि ॥११॥

मणवेगिणो अ पणमह गिरिरायअइच्छगे पणिवयामि ।
दिस्सादिस्से नमिमो नमह य सव्विड्ढिसंपन्ने ॥१२॥
पणमह पडिमावन्ने तवोविहाणेसु चेव सव्वेसु ।
पणमामि गणहराणं जिणजणणीणं च पणमामि ॥१३॥
केवलनाणं पणमामि दंसणं तह य सव्वनाणाइं ।
चारित्तं पंचविहं तेसु अ जे साहुणो सव्वे ॥१४॥
चक्कं छत्तं रयणज्झउ अ चमराइं दुंदुहीकंती ।
सीहासणकिंकिल्ली पणमह वाणी जिणिंदस्स ॥१५॥
वंदामि सव्वसिद्धे पंचाणुत्तरनिवासिणो जे अ ।
लोगंतिए अ देवे वंदे सव्वे सुरिंदे अ ॥१६॥
आहारगदेहधरे उवसामगसेढिसंतिए वंदे ।
सम्मदिट्ठिप्पभिई सव्वे गुणठाणगे वंदे ॥१७॥
संती कुंथू अ अरो एआणं आसि नवमहानिहिणो ।
चउदसरयणाणि पुढो छन्नउईगामकोडीओ ॥१८॥
ता एआणं पणमह पणमह अन्ने वि चक्किणो सव्वे ।
जे अरहंति पणामं भवम्मि धुवभाविमुक्खाय ॥१९॥
बलकेसवाण जुअले पणमह अन्ने वि भव्वठाणे अ ।
सव्वे वि वंदणिज्जे पवयणसारे पणिवयामि ॥२०॥
ॐ मे अ वग्गु वग्गु सोमे सोमणस होइ महु महुरे ।
किलि किलि अप्पडिचक्का हिलि हिलि देवीउ सव्वाओ ॥२१॥
इअ पवयणस्स सारं मंगलमेअं तु पुइअं इत्थ ।
एअं जो पढइ नरो सम्मद्दिट्ठी वि गोसग्गे ॥२२॥
तद्दिवसं तस्स भवे कल्लाणपरंपरा सुविहिअस्स ।
जं जं सुहं पसत्थं मंगल्लं होई तं तस्स ॥२३॥

इति प्रवचनमङ्गलसारस्तवः श्रीसूरिणा सूरिमन्त्रध्यानावसरे उभयसन्ध्यं च सम्यग् ध्येयः स्वपरहितार्थमिति ॥

[५]

## श्रीपूर्णचन्द्रसूरिविरचितं

# श्रीसूरिविद्यागर्भितलब्धिस्तोत्रम् ॥

उत्ततकणयवन्नं झाणं धरिऊण सुहगमुद्दाए ।
जो झाइ सूरिविज्जं तस्स वसे तिहुअणं सयलं ॥१॥
सजलजलवाहकालं झाणं धरिऊण चक्कमुद्दाए ।
जो झाइ सूरिविज्जं तस्स खय जाइ रिउवग्गो ॥२॥
जिण१-ओहि२-परमोहि३-अणंतोहि४-अणंतणंतओहिजिणा५ ।
केवलि६-भवत्थकेवलि७-अभवत्थि अ केवलीणं८ च ॥३॥
उज्जुमई९ विउलमई१० वेउव्वियलद्धि११-सव्वलद्धीणं१२ ।
पण्हासमणा१३ य तहा जंघाचारणमुणीणं१४ ॥४॥
विज्जासिद्धाणं१५ तहा आगासग(गा)मीण१६ तह य निच्चं पि ।
वयणविस१७-तत्तलेसाण१८ पणमिमो सीअलेसाणं१९ ॥५॥
चउदस२०-दसपुव्वीणं२१ इक्कारसअंगधारीणं२२ ।
तह य दुवालसअंगीणं२३ उग्गतवचरणधारीणं२४ ॥६॥
सव्वेसिं पि जिणाणं एएसि पयाण छट्टिवहुवयणं ।
आइम्मि नमो सद्दो ॐ ह्रीँ सट्टिओ अ पढमपए ॥७॥
सुक्कज्झाणेणेसो कम्मक्खयकारणो परममंतो ।
झायव्वो अ तिकालं निच्चं परमिट्ठिमुद्दाए ॥८॥
खीरासव१-महुआसव२-अमिआसवलद्धिआण पत्तेअं३ ।
अक्खीणमहाणसलद्धिआण४ संभिन्नसोआणं५ ॥९॥
तत्तो पयाणुसारिय लद्धीणं६ तह य बीअबुद्धीणं७ ।
तत्तो अ कुट्ठबुद्धीण९ सव्वपयाओ नमो आसी ॥१०॥
एएसि नमोक्कारं किच्चा इच्चाइ जा विज्जा स्वाहा ।

किं सुअसुअमुहवन्नं झायं धरिऊण जोणिमुद्दाए ।
विज्जंसो सोहग्गं पावइ जवईण जोगं च ॥१२॥
उत्ततकणयवन्नं० ॥१३॥
सजलजलवाहवन्नं० ॥१४॥
इअ एए उवएसा सव्वे नाऊण झाइ जो सूरी ।
सो पुन्नचंदसूरीण संमयं लहइ सिवसुक्खं ॥१५॥

·इति श्रीसूरिविज्जागर्भितलब्धिस्तोत्रं समाप्तम् ॥
श्रीसूरिवराणां सदा पठनीयम् ॥छ॥

श्रीचक्रेश्वरसूरिरचित:

# श्रीवर्धमानविद्यास्तव: ॥

विलसंत जोइचीए परमिष्ठीणं सरेमि पंचन्हं ।
सुह पुट्टि तुट्टि संतिग आरुग्ग एए पए पयउ ॥१॥
केवलसिरितिलयाणं अट्ठमहापाडिहेरकालियाणं ।
तिहुयणपणयाण नमो अरिहंताणं सयाकालं ॥२॥
सिद्धिगइमुवगयाणं अप्पडिहयनाणदंसणसिरीणं ।
सासयरुवाण नमो सिद्धाणमणंतसोक्खाणं ॥३॥
जिणपहपइट्ठियाणं पंचविहायारसारचरियाणं ।
पवयणवसहाण नमो आयरियाणं सुहनिहीणं ॥४॥
सययं नमो उवज्झायाणं अणवरयसुयपयायेणं ।
अणुगहियमुणिगणाणं अहीणवरणाणजलहीणं ॥५॥
निच्चं पि नमो लोए सव्वसाहूणमणहवित्तीणं ।
मुत्तिवहुसंगमुस्सुयमणसाण वि निरभिसंगाणं ॥६॥
तह ओहि-परमोहि-सव्वोहि-अणंतओसहीणं च ।
सज्जोइपयाण नमो जिणाण सव्वेसिमेएसिं ॥७॥
तस्स य नमो भगवओ महइ महासिद्धिणो कुणइ विज्जा ।
वीरे य सेणवीरे जयंति अपराजिए सव्वे ॥८॥
जाणेसो पंचनमुक्कारो निवसइ मणे महामंतो ।
ताण न पिसाय-साइणि-भूयाइ भयाइं पवहंति ॥९॥
सुमरियमित्तो वि इमो तिलोयरक्खा-विवक्खमणमहणो ।
रणरायगपसाइसु विजयपडायं पयच्छेइ ॥१०॥

गुणिओ अ सव्वपावप्पणासणो तह य मंगलाणं च ।
सव्वेसिं पढमं हवइ मगल सुमइसूरीहिं ॥११॥
वद्धमाणविज्जा चक्केसरपहुपसाय संपत्ता ।
पंचपरमिट्ठिणो मह हवंतु सुलहा पइ भवम्मि ॥१२॥

## श्रीमन्त्राधिराजगर्भितं

# श्रीगौतमस्वामिस्तवनम् ॥

नमोऽस्तु श्री-ह्री-धृति-कीर्ति-बुद्धि-लक्ष्मीविलासैकनिकेतनाय ।
श्रीवीरपट्टाम्बरभास्कराय लोकोत्तमाय प्रभुगौतमाय ॥१॥
ॐकारमक्षीणमहानसानां श्रीमन्तमुज्जृम्भतपःप्रभावैः ।
ह्रींमन्तमात्मानुगवन्दनेनार्हन्तं नमस्यामि तमिन्द्रभूतिम् ॥२॥
उन्निद्रसौवर्णसहस्रपत्रगर्भस्थसिंहासनसंनिषण्णम् ।
दिव्यातपत्रं परिवीज्यमानं सच्चामरैश्चामरराजसेव्यम् ॥३॥
कल्पद्रु-चिन्तामणि-कामधेनुसमाननामानममानशक्तिम् ।
अनेकलोकोत्तरलब्धिसिद्धं श्रीगौतमं धन्यतमाः स्मरन्ति ॥४॥
एकैव षड्दर्शनदृक्कनीनिका पुराणवेदागमजन्मभूमिका ।
आनन्द-चिद्-ब्रह्ममयी सरस्वती सदेन्द्रभूतेश्चरणोपसेविनी ॥५॥
सदा चतुष्षष्टिसुरेन्द्रमानसव्यामोहिनी पद्मह्रदाधिवासिनी ।
सर्वाङ्गशृङ्गारतरङ्गितद्युतिः श्रीगौतमं श्रीरपि वन्दते त्रिधा ॥६॥
जया-जयन्ती-विजया-ऽपराजिता-नन्दा-सुभद्राप्रमुखः सुरीजनः ।
प्रतिक्षणोज्जागरभूरिविभ्रमः श्रीगौतमं गायति गाढगौरवः ॥७॥
मानुषोत्तरगिरेः शिरः स्थिता दोः सहस्रसुभगा महाप्रभा ।
गीतगौतमगुणा त्रिविष्टपस्वामिनी शिवशतं दधातु मे ॥८॥
यक्षषोडशसहस्रनायको दिव्यविंशतिभुजो महाबलः ।
द्वादशाङ्गसमयाधिदेवता गौतमस्मृतिजुषां शिवङ्करः ॥९॥
ईशाननाथेन समं शतक्रतुः सनत्कुमाराधिपतिः सुरान्वितः ।
श्रीब्रह्मलोकाधिपतिश्च सेवते सगौतमं मन्त्रवरं पदे पदे ॥१०॥
अष्टनागकुलनायको मणिप्रोल्लसत्फणसहस्रभासुरः ।
गौत्तमाय धरणः कृताञ्जलिर्मन्त्रराजसहिताय वन्दते ॥११॥

रोहिणीप्रभृतयः सुराङ्गना वासवा अपि परे सदाश्रवाः ।
गौतमं मनसि यक्ष-यक्षिणीश्रेणयोऽपि दधती मुनीश्वरम् ॥१२॥
सज्जलान्नघनभोगधृतीनां लब्धिरद्भुततमेह भवे स्यात् ।
गौतमस्मरणतः परलोके भूर्भुवःस्वरपवर्गसुखानि ॥१३॥
ॐ क्रों श्रीँ ह्रीँ मन्त्रतो ध्यानकाले पार्श्वे कृत्वा प्राञ्जलिः सर्वदेवान् ।
कायोत्सर्गैर्धूपकर्पूरवासैः पूजां कुर्यात् सर्वदा ब्रह्मचारी ॥१४॥
जितेन्द्रियः स्वल्पजलाभिषेकवान् शुद्धाम्बरो गुप्ति-समित्यलङ्कृतः ।
श्रीइन्द्रभूतेरुपनैणवं गुणान् स्मरन्नरः स्याच्छ्रुतसिन्धुपारगः ॥१५॥
तं श्रयन्ति पुरुषार्थसिद्धयो भूष्यते विशदसाहसेन सः ।
गौतमः प्रणयिमुक्तिमुक्तिदो यस्य भाविविभवस्य नायते ॥१६॥

[८-१]

श्रीमुनिसुन्दरसूरिविरचिता

# श्रीसूरिमन्त्राधिष्ठायकस्तवत्रयी ॥

जयश्रियं श्रीजिनशासनस्य कलिद्विपोत्थोत्सिकुविघ्नहर्त्ता ।
परे य एते ध्रुवतेऽधुनापि श्रीसूरिमन्त्रं प्रयतः स्तवीमि ॥१॥
त्वं तीर्थकृत् त्वं परमं च तीर्थं त्वं गौतमस्त्वं गणभृत् सुधर्मा ।
त्वं विश्वनेता त्वमसि हितानां निधिः सुखानामिह मन्त्रराज ! ॥२॥
किं कामधेनुः सुरपादपो वा किं कामकुम्भः सुमनोमणिर्वा ।
यदि प्रसन्नः सकलेष्टदायी श्रीसूरिमन्त्रोऽसि जगत्पतिस्त्वं ॥३॥
त्वयि स्थिते किं ननु विघ्नवर्गाः के दुर्जनाः के प्रतिपक्षभूपाः ।
के वैरिणस्ते किमुपद्रवाश्च स्वामिन् ! समग्रं हि सुखाकृदेव ॥४॥
न लब्धयः काश्चन ते प्रभावात् त्वयि प्रभो ! भक्तिभृतां दुरापाः ।
सदासुखानन्दितचेतसो यत् खेलन्ति ते श्रीमहिमप्रभाभिः ॥५॥
प्रवर्तितं तीर्थमिदं जनस्य जयाद्यदाहुः प्रसहेत कुष्ठी ।
यदागमो यद्विजयी च धर्मस्त्वदत्र हेतुर्भगवांस्त्वमेव ॥६॥
श्रीवर्धमानस्य निदेशतस्त्वं प्रतिष्ठितो गौतमगच्छनेत्रा ।
सिद्धिः समग्रा शिवसंपदश्च सर्वोग्रपुण्यानि फलानि दत्से ॥७॥
इति महामुनिसुन्दरसंस्तवोऽकृत गणेश्वरमन्त्रपतेर्मया ।
महिमवारिनिधेस्तुतभक्तितो वितर मेऽर्थितसर्वसुखाश्रियम् ॥८॥

[९-२]

## श्रीसूरिमन्त्रस्तोत्रम् ॥

जयश्रियं शासनमार्हतं श्रीसूरीश्वरा यस्य महामहिम्ना ।
नयन्ति बाह्यान्तरवैरिनाशादाचार्यमन्त्रं तमहं स्तवीमि ॥१॥
न किं सुखं तस्य वशे न का वा सिद्धिर्न बुद्धिर्न हि वा समृद्धिः ।
श्रीमन्त्रणेन भगवान्निवासं करोषि नित्यं हृदये यदीये ॥२॥

गणाधिपो वा जिननायको वा ध्यायोऽपि धर्मोऽस्य महामहिम्ना ।
स्तुतिस्त्वैषा शुचितोपमाना न चातिहानस्त्रिदशद्रुमाये ॥३॥
ध्येयस्त्वमेवासि परो जगत्सु प्रभुस्तु दानेऽर्थितशर्मलक्ष्म्या ।
इम पुन कारणकार्ययोग के नामविनो (        ) ग्रमाम्य (?) ॥४॥
किमामयस्तस्य खलो रिपुर्वा दु:ख भय पापमथापि विघ्न ।
त्रातासि मन्त्राधिप ! यस्य वज्र भिनत्ति स चाण्वखिलान्यद्रिन् ॥५॥
तीर्थस्य धर्मस्य तथार्हतस्य हेतुस्त्वमेकोऽसि कलौ प्रवृत्ते ।
कलेर्हि नान्योऽभिभवे प्रभुत्व धत्ते दवाग्नेरिव वारिवाह ॥६॥
भवैरनन्तैरपि दुर्लभस्त्व शुभ च सर्वं सुलभ त्वदाशी ।
तवैव मन्त्राधिपते ! तदेव कुर्या समाराधनमेव यत्नात् ॥७॥
इति महामुनिसुन्दरसस्तवोऽकृत गणेश्वरमन्त्रपतेर्मया ।
महिमवारिनिधेस्तुतमक्तितो वितर मेऽर्थितसर्वसुखश्रियम् ॥८॥

इति सूरिमन्त्रस्तोत्रं समाप्तम् ॥

[१०-३]

## श्रीगौतमगणधरस्तोत्रम् ॥

जयसिरिविलासभवण वीरजिणदस्स पढमसीसवई ।
सयलगुणलद्धिजलहिसिरिगोयमगणहरं वदे ॥१॥
ॐ सह नमो भगवउ जगगुरुणो गोयमस्स सिद्धस्स ।
बुद्धस्स पारगस्स अखीणमहाणसस्स सया ॥२॥
अवतर अवतर भगवन्मम हृदये भास्करीश्रियम् ।
बिभृहि ह्रीँ श्रीँ ज्ञानादि वितरतु तुभ्य नम स्वाहा ॥३॥
वसइ तुह नाममतो जस्स मणे सयलवछिअ दितो ।
चिंतामणिसुरपायवकामघडाहि किं तस्स ॥४॥
सिरिगोयमगणनायग तिहुअणजणसरणदुरियदुहहरण ।

मेरुसिरे सिंहासण कणयमहासहस्सपत्तकमलठिअं ।
सूरिगणकाण विसय ससिप्पह गोयमं वंदे ॥६॥
सव्वसुहलद्धिदाया सुमरियामित्तो वि गोयमो भयवं ।
पइट्ठिअगणहरमंतो दिज्ञा मम मनवंछियं सयलं ॥७॥
इय सिरीगोयमसंथुअं मुणिसुंदर थुइ पयं मए पि तुमं देहि ।
महासिद्धिसिवफलयं भुवणकप्पतरुवरस्स ॥८॥

इति श्रीगौतमगणधरस्तोत्रम् ॥

आचार्यश्रीविजयपद्मसूरिविरचितानि

# श्रीसूरिमन्त्रपञ्चप्रस्थानस्तोत्राणि ॥

## श्रीविद्यापीठस्तोत्रम् ॥

आर्याछन्दः ॥

सिरिसिद्धचक्क मिट्ठं, वंदिय गुरुणेमिसूरिचरणकयं ।
सिरिसूरिमंतपगयं, विज्जापीढं थुणिस्सामि ॥१॥
पत्थाणपणगझाणे, सिरिजिणवइकेवलीण विरहम्मि ।
जिणसासणपासाए, दीवसमे सूरिणो वंदे ॥२॥
विज्जापीढं पढमं, बीयं पीढुत्तरा महाविज्झा ।
लच्छीपीढं तइयं, णमह तुरियमंतपीढं च ॥३॥
परममहोदयबीयं, पंचमसिरिमंतरायपीढं च ।
पत्थाणपणगमेयं, सज्झाणगयं कुणउ भद्दं ॥४॥
ॐ पयणमोपएहिं, सहियाण जिणाण सुद्धरूवाणं ।
ओहिजिणाणं परमोहिजिणाणं पुज्जचरणाणं ॥५॥
सव्वोहिजिणाण मणंतोहिजिणाणं विसुद्धभावाणं ।
तहऽणंताणंतोहिजिणाणं गुणसत्थसहियाणं ॥६॥
तह केवलीणमेवं, अभवत्थभवत्थकेवलीण णमो ॥
चउद्दसपुव्वीण नमो, दसपुव्वीणं तहेव नमो ॥७॥
संजमतवनिरयाणं, नमो तहिक्कारसंगधारीणं ।
सिरिकुट्ठबीयबुद्धीण णमो परमत्थकलियाणं ॥८॥
तह उग्गतवचरणकरणधारीणं गोयमस्स लद्धीणं ।
चिंतागणचिंता तह, सुहम्मगणसामिणो य णमो ॥९॥
एएसिं सव्वेसिं, किच्चा बहुमाणओ णमोक्कारं ।
ससमयपसिद्धविहिणा, जमिमं विज्झं पउंजामि ॥१०॥

पवरज्झवसायस्स उ, पउमासणसंणिसण्णधण्णस्स ।
पवरा सा मे विज्झा, पसिज्जउ तहा नमः स्वाहा ॥११॥
विज्झापीढत्थवणं, तित्थयरायरियसाहुथुइगब्भं ।
कुणउ सया कल्लाणं, भावायरियाण सझ्याणं ॥१२॥
तवगच्छाहिवपरमोवयारिगुरुणेमिसूरिसीसेणं ।
पउमेणायरिएणं, थुणियं वरपढमपत्थाणं ॥१३॥

[१२-२]

## द्वितीयं श्रीमहाविद्यापीठस्तोत्रम् ॥

वंदियथंभणपासं, गुरुवरसिरिनेमिसूरिपयकमलं ।
सिरिमहविज्झापीढं, थोसामि निअण्णकल्लाणं ॥१॥
बाहुबलीमहविज्झा, विज्झ त्ति तिभेयसालिणी विज्झा ।
इह महविज्झापीढे, बाहुबलिप्पमुहपयनवगं ॥२॥
बाहुबलिस्स१ भगवओ२, ॐपयपुव्वं णमो इयण्णेसिं ।
पण्हसमणस्स३ णिच्चं, नमो महापण्हसमणस्स ॥३॥
तह सयबलवीरियस्स उ, देहमहबलस्स चेव णमो ।
तह जोहपरक्कमस्स य, सहस्सबाहुस्स चेव णमो ॥४॥
महबलपरक्कमस्स य, ॐपयपुव्वं णमो णमो णिच्चं ।
सव्वेसिं एएसिं, किच्चा भावा णमुक्कारं ॥५॥
सा मे महइविसिट्ठा, मह विज्झा पसिज्झउ नमः स्वाहा ।
परमज्झाणुल्लासा, जमिं मे विज्झं पउंजामि ॥६॥
इय महविज्झापीढत्थवणं माहप्पजुत्तमंतपयं ।
भावायरियाण सया, मंगलकल्लाणरिद्धिदयं ॥७॥
महविज्झापीढसुरे, जिणसरणो विण्णवेमि सरिऊणं ।
सव्वत्थ य सव्वेसिं, कुणंतु णिव्विग्घसुहसंती ॥८॥
विहियं तवगच्छगयणदिणयरसिरिनेमिसूरिसीसेणं ।
पउमेणायरिएणं, महविज्झापीढथवणमिणं ॥९॥

[१३-३]

## तृतीयं श्रीलक्ष्मीपीठस्तोत्रम् ॥

सिरिसंखेसरपासं, पणमियगुरुनेमिसूरिपयपउमं ।
लच्छीपीढत्थवणं, थुणमि चरणाइलच्छीयं ॥१॥
उवविज्झेयं गिज्झइ, सिरिदेवीहिट्ठिया पहावड्ढा ।
भावायरियाण सया, झाणंताणं गुणसिरिदयं ॥२॥
रियाए कीरियाए, गीरिआए पीरिआए सीरिआए ।
हीरियाए आयरिआए, कालिकालिमहाकाली ॥३॥
सव्वेसिं एएसिं, पयाण माहप्पपुण्णतत्ताणं ।
भावेण नमुक्कारं, परमुण्णइदायगं किच्चा ॥४॥
सा मे महइ विसिद्धा, महविज्झा पसिज्झउ नमः स्वाहा ।
निम्मलजोगुल्लासा, जमिमं विज्झं पउंजामि ॥५॥
लच्छीपीढत्थवणं, भवणं कल्लाणकेलिकमलाणं ।
भावायरियाण सया, सयलिच्छियदायगं होउ ॥६॥
लच्छीपीढपहावो, वित्रण्णिओ सूरिमंतसत्थेसुं ।
विहिणाराहणमप्पं अप्पा संसाहगा भव्वा ॥७॥
निम्मलसीलाइगुणा, विहिबोहा निण्णियाणसम्भावा ।
सम्मद्दिट्ठिनिरीहा, परोवयारट्ठियपवित्ती ॥८॥
णिग्गयजोगवियारा, मज्झत्था पत्तसूरिपयसुगुणा ।
मंतफलं पावेंते, विविहाणत्थे लहंति थेरे ॥९॥
विहियं तवगच्छगयणदिणयरसिरिनेमिसूरिसीसेणं ।
उमेणायरिएणं, लच्छीपीढत्थवणमेयं ॥१०॥

[१४-४]

## चतुर्थं श्रीमन्त्रपीठस्तोत्रम् ॥

सिरिचिंतामणिपासं, पणमिय परमोवयारिनेमिपयं ।
वरमंतपीढथवणं, पणेमि परमुण्णइयमावं ॥१॥

ॐसिरिइरिइरिकाली, गिरिगिरिकाली णमो य ॐपुव्वं ।
किरिकिरिकाली य नमो, पीरिपीरिकाली णमो णिच्चं ॥२॥
सिरिसिरिकाली य नमो, हिरिहिरिकाली णमो य ॐपुव्वं ।
आयरियायरियकाली, णमुत्थु णं मंतपीढस्स ॥३॥
सव्वेसिं एएसिं, अचिंतमाहप्पसंजुयपयाणं ।
भावेण नमुक्कारं, परमुण्णइदायगं किच्चा ॥४॥
सा मे महइ विसिट्ठा, महविज्झा पसिज्जउ नमः स्वाहा ।
अप्पियभावुल्लासा, जमिमं विज्जं पउंजामि ॥५॥
उण्णइयमंतपीढं, महप्पहावं समत्थवंछिययं ।
विग्घविणासगमेयं, भयहरणं जोगखेमयरं ॥६॥
जसकित्तियरं परमं, कल्लाणणिबंधणं महुल्लासा ।
झाअंतायरियाणं, रिद्धी वुड्ढी कुणउ णिच्चं ॥७॥
सिरिमंतपीढसरणं, पसंतिदायगमिणं महाविजयं ।
भव्वाणं भव्वफलं, होउणणेसिं विवज्जासो ॥८॥
सिरिमंतपीढविउहे, जिणसरणो विण्णवेमि सरिऊणं ।
सव्वत्थ य सव्वेसिं, कुणंतु णिव्विग्घमब्भुअयं ॥९॥
विहियं तवगच्छगयणदिणयर सिरिणेमिसूरिसीसेणं ।
पउमेणायरिएणं, थुत्तं सिरिमंतपीढस्स ॥१०॥

[१५-५]

## पञ्चमं श्रीमन्त्रराजपीठस्तोत्रम् ॥

सिरिसिद्धचक्कमंतं, पणमिय गुरुनेमिसूरिपयकमलं ।
सिरिमंतरायपीढत्थुत्तं विरएमि भद्दपयं ॥१॥
ॐ ह्रीँ श्रीँ इरिमेरु, किरिमेरु णमो तहेव गिरिमेरु ।
पीरिमेरु सिरिमेरु, हिरिमेरु य आयरियमेरु ॥२॥
सव्वेसिं एएसिं, पयाण सव्वट्ठसिद्धिकरणाणं ।
भावेण नमुक्कारं, भवभमणविणासगं किच्चा ॥३॥

सा मे महइविसिट्ठा, महविज्झा पसिज्झउ नमः स्वाहा ।
मणथिज्जमहुल्लासा, जमिमं विज्झं पउंजामि ॥४॥
सिरिमंतरायपीढं, पसत्थझाणावलंबणं हिअयं ।
सव्वोवद्दवनासं, सयलिच्छियदाणकप्पयरू ॥५॥
पाउब्भवइपसाया, जस्स वरो अट्ठवीसलद्धिगणो ।
इह दिट्ठंता नेया, चउनाणी गणहरा सव्वे ॥६॥
सययं मंगलमाला, विस्तारो पसरए सयलभुवणे ।
धिइमइकमलावुड्ढी, पंचमपत्थाणसज्झाणा ॥७॥
पणपत्थाणसरूवं, आयारिया पवरसूरिमंतमिणं ।
पकुणंतु झाअंता, जिणतित्थपहावणं विउलं ॥८॥
विहियं तवगच्छगयणदिणयरसिरिनेमिसूरिसीसेणं ।
पउमेणायरिएणं, थुत्तं सिरिमंतरायस्स ॥९॥

श्रीसिंहतिलकसूरि-विरचितः

# श्रीवर्द्धमानविद्याकल्पः ॥

[१]

श्रीवीरजिनं नत्वोपाध्याय-महत्तरादिपदयोग्यम् ।
श्रीवर्द्धमानविद्यायन्त्रं षट्कोणबीजमथ वच्मि ॥१॥
परमेष्ठिपञ्चविद्याः५ कैश्चित् स्तुतिपदैर्युताः ।
श्रीसूरिमन्त्रसौभाग्यविद्यादेस्तु पृथक्कृतैः ॥२॥
ॐवीरे द्विमुखैर्वाजैर्युक्ता श्रीवज्रवाचना ।
श्रीवर्द्धमानविद्याऽभूदुपाध्यायादिहेतवे ॥३॥
स्वकृते वहिकापट्टे राजतपत्रे [१]सुगन्धिकुसुमैश्च ।
जातीसुवर्णदूर्वालेखिन्या लिखितषट्कोणे ॥४॥
गर्भे जिनपतिबीजं हरि-गिरिश-ब्रह्मवर्णसंभूतम् ।
एतन्मध्ये माया तदन्तरा प्रणव एष विश्वतनुः ॥५॥
जिनबीजमौलिमुकुटे ह्याद्यं वर्णत्रयं क्रमेणाद्यः ।
षष्ठे स्वरयुत ऊर्ध्वं सबिन्दु [हूं]रन्यश्च सविसर्गः [हः] ॥६॥
अपरो युक्तः सन्ध्यक्षरेण तुर्येण सकलशून्येन ।
ह्रौँ सनमोऽथ वर्द्धमानस्वामिन इति [२]पवन-गगनमिति[३] परिधिः ॥७॥
षट्कोणादिक्रमतः प्रणवो वीरे युगं च जयवीरे ।
समहावीर-सेणवीरे इति वद्धमाणवीरे च ॥८॥
सजये विजये जयन्ते अपरा संयुतजये य सव्वट्टा ।
सिद्धे तह निव्वुए महाणसे महाबले स्वाहा ॥९॥
संविभज्याक्षरा एते लेख्याः कोणेषु षट्स्वपि ।
एषा पञ्चाननी विद्या सूरिविद्यासमा मता ॥१०॥

---

१ वस्तुरसैरिति । २ पवन=स्वा, गगन=हा । ३ परिधिः पर्यदित्यर्थः ।

उक्तं च—

उत्पत्तिं विगम-ध्रुवं गणधराः प्रोच्चैर्निशम्याननाद्
व्याख्यान्ते जिनभर्तुरुत्तमधियश्चक्रुर्जिनेन्द्रागमम् ।
पूर्वं गौतमनामधेयगणभृत् सारस्वतप्रोल्लसद्-
विद्यामुधदपूर्वतत्त्वतरणिं श्रीवर्द्धमानाभिधाम् ॥११॥

षट्कोणान्तर्निविष्टं हरि-विधि-गिरिशैर्नाममन्त्रेण युक्तं
यद्रूपं शान्तभावं शिवपदकलितं तत्त्वसारं विदन्ति ।
मायाबीजं यदन्तः शिवपदसुगतौ दत्तनेपथ्यभावं
तस्यान्तः साधकस्य प्रणवपदमिदं युक्तमास्ते जनस्य ॥१२॥

अर्हं मन्त्रस्य मौली मुकुटमणिमयं ह्रादिवर्णत्रयं यत्
पूर्वं शून्योपरुद्धः [1]स्वरशरपरगः श्रा परोऽग्रे विसर्गः ।
तस्मादन्त्यस्वरेणान्वितसकलवपुर्बिन्दुयुक्तश्च वर्णः
स्वाहान्तं वर्द्धमानान्वितमिति च नमः स्वामिने मन्त्ररूपम् ॥१३॥

एतन्मन्त्रपवित्रयन्त्रमसमं वीरे द्विरुक्त्याऽन्वितं
षट्कोणेषु जयादिवीरकलितं ध्यायेत् स योगीश्वरः ।
तस्याहर्निशमेव संपदतुला लीलाविलासोज्ज्वला
संपद्येत मनोरमा सुरवरैः काम्येतया कौतुकात् ॥१४॥

इति पौराणी वाणी ॥

बीजत्रितयस्यार्थः—

अकारो भुजगाकृत्या कुण्डली विश्वजन्मभूः ।
तत्परो हः शिवः स्वात्मा राजते अर्हमित्यतः ॥१५॥
प्रायो यन्त्रे परैः हं स्यात् कुण्डलीजन्मभूज्झितः ।
अर्हमित्यादिगणनादूर्ध्वं रत्नत्रयाश्रयः ॥१६॥

---

१ सुरगमत इत्यपि पाठः ।

— दूर्वोधः सत्रिरत्नयुक् ॥

रपरं हं त्रिकोणरुद्धं ईश्वरखण्डेन्दुविन्दुनादाढ्यम् ।
आज्ञाचक्रे पश्यति वह्निपुरेशाक्षिपरसंज्ञे ॥१७॥

ोषश्च—

लक्ष्यं त्रिकोणशब्दात् तत्र शिवं ह-प्राणरूपशक्तिवृतम् ।
चन्द्रकलाशशिनाढ्यां साविन्दु यो जपति तस्य वश्याप्तिः ॥१८॥

ा—

षट्कोणेऽधिष्ठाने मायाबीजं स्फुलिङ्गवद् ध्यायेत् ।
षट्कोणे देहे वा स्त्रीणामिह वश्यमेवाशु ॥१९॥
अउत उपाधित्यक्तश्चैतन्यकलामयो वपुः शून्यः ।
नादः शब्दोच्चार्यः प्रणवः सिद्धो जिनस्यात्मा ॥२०॥
बीजत्रितयस्यार्थो गणभृन्मन्त्रेऽथ चर्चितः किन्तु ।
दिग्मात्रमिदं दर्शितमत्रेतो लिखनविधिमाह ॥२१॥

लिखनविधिः]—

कोणान्तरेषु६ ॐ क्रों ह्रीँ नँअग्रे ह्रद्वयं द्वयम् ।
रुद्रवर्ण-शिरः११ शून्यं क्रमात् सद्वादशस्वरम् ॥२२॥

था च—आं क्रोँ ह्रीं ३ सर्वत्र ह्रं ह्रां १ ह्रिं ह्रीं २ ह्रुं ह्रूं ३ ह्रें ह्रैं ४ ह्रों ह्रौं ५ ह्रं ह्रः६ कोणेषु
ातम् ।

सर्वस्वराद्यजिनपतिगौतमबीजैः सगौतमो वीरः ।
द्वादशपर्षन्मध्ये ध्येयः स्वाहा-नमोऽन्त्यपदः ॥२३॥
वृत्तरेखान्तरा षोढा विभज्य सृष्टितो लिखेत् ।
नँ ह्रीँ ह्रमथ वीराय स्वाहा६ क्षुं १त्रिपदे परे ॥२४॥
श्रीवीरपूजयाऽधिष्ठाधिसहस्रं जपतः पुरा ।
सिद्धौ चाष्टशतं जप्ताऽक्षतैरक्षीणकोशता ॥२५॥

१ ह्रं स्थाने ।

चतुरस्रमतः कृत्वाऽग्न्यादिकोणचतुष्टये ।
जये१ विजये२ जयन्ते३ तत् क्रमादपराजिते[४] ॥२६॥
नामादौ प्रणवो माया प्रान्तेषु ह्यचतुष्टयम् ।
आँ ईं ऊं अः सहैकैकं क्रमात् स्वाहाऽस्य सर्वतः ॥ स्वाहा ॥२७॥
जयादयश्चतस्रोऽमूः सिद्धाः स्व-परदेशजम् ।
जयं विजयं वाद्युत्यमन्त्यं कुर्युर्द्वयं नृणाम् ॥२८॥
चतुरस्रं चतुद्वारमतः कृत्वाऽत्र सृष्टितः ।
लेख्या वलयतो विद्या वर्धमानाभिधा इमाः ॥२९॥

[वाचनाचार्य-प्रवर्तिन्योर्मन्त्रः—]

ॐ ह्रीँ नमो अरिहंताणं ५ ।

ॐ ह्रीँ नमो भगवओ अरिहंतस्स महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई [महई] महाविज्जा ।

ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जये विजये जयन्ते अपराजिए अणिहए ॐ ह्रीँ स्वाहा ॥

परमेष्ठिपदैः पञ्चभिः ॐ ह्रींयुग्मिः सपञ्चयुगवर्णाः४५ ।
ॐ ह्रीँ नम इति विद्यायाः प्रान्तौर्द्विवार्ययो वर्णाः ॥३०॥
पञ्च५-युगत्रय४४४-षट्कं६
द्वि२-गुण३-त्रय३-पञ्च५-वार्द्धि४-युग२-युगलम्२ ।
सर्वेस्य चत्वारः श्लोका वर्णत्रयं शेषम् ॥३१॥
एषा तु वाचनाचार्य-प्रवर्त्तिन्योः शुभेऽह्नि ।
देया मातिशये चैत्ये सर्वकर्मकरी तयोः ॥३२॥

[उपाध्यायविद्या:—]

ॐ ह्रीँ नमो अरिहंताणं ५ । ॐ ह्रीँ नमो भगवओ अरिहंतस्स महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महइ महावीरवद्धमाणसामिणी महाविज्जा ॥

परमेष्ठिपदैः पञ्चभिः ॐ ह्रींयुग्मिः सपञ्चयुगवर्णाः४५ ।
ॐ ह्रीँ नम इति विद्याप्रान्तैर्वेदाऽऽक्षमितवर्णाः५४ ॥३३॥

ॐ ह्रीँ वीरे वीरे ॐ ह्रीँ महावीरे महावीरे ॐ ह्रीँ जयवीरे जयवीरे ॐ ह्रीँ सेणवीरे सेणवीरे ॐ ह्रीँ वद्धमाणवीरे वद्धमाणवीरे ॐ ह्रीँ जये जये ॐ ह्रीँ विजये विजये ॐ ह्रीँ जयन्ते जयन्ते ॐ ह्रीँ अपराजिए अपराजिए ॐ ह्रीँ सव्वट्ठसिद्धे निव्वुए महाणसे महाबले स्वाहा ॥

वीजद्वयपुनरुक्त्या विद्यावर्णा इहैकनवतिमिताः ।
एतैः प्राग्वर्णयुतैः पट्श्लोकाः स्युर्द्विवर्णोनाः ॥३४॥
अक्षैर्निपद्यया सार्द्धमुपाध्यायमहास्पदम् ।
देया योग्याय शिष्याय विद्येयं सर्वकर्मकृत् ॥३५॥

विद्याविशेपश्चात्र, [आचार्यतुल्ययतियोग्यविद्या—]

ॐ ह्रीँ ह्रँ नमो जिणाणं १, ॐ ह्रीँ नमो ओहिजिणाणं २, ॐ ह्रीँ नमो परमोहिजिणाणं ३, ॐ ह्रीँ नमो सव्वोहिजिणाणं ४, ॐ ह्रीँ नमो अणंतोहिजिणाणं ५, ॐ ह्रीँ नमो कुट्ठबुद्धीणं ६, ॐ ह्रीँ नमो पयाणुसारीणं ७, ॐ ह्रीँ नमो संभिन्नसोयाणं ८, ॐ ह्रीँ नमो चउदसपुव्वीणं ९, ॐ ह्रीँ नमो अट्ठंगनिमित्तकुसलाणं १०, ॐ ह्रीँ नमो विउव्वणइड्ढिपत्ताणं ११, ॐ ह्रीँ नमो विज्जाहराणं १२, ॐ ह्रीँ नमो पन्न(ण्ह)समणाणं १३, ॐ ह्रीँ नमो आगासगामिणीणं १४, ॐ ह्रीँ क्रोँ क्रोँ य्रौँ य्रौँ स्वाहा ।

स्तुतिपदमनुभिर्विद्या१४ गणभृद्वीजान्वितादिमध्यान्ता ।
आचार्यतुल्ययतये देया स महानुपाध्यायः ॥३६॥
अष्ट८-नव९-रुद्र११-दशकं१०
प्रतिमा११-नव९-दश१०-दशेश्वरा१०-११ मनवः१४ ।
त्र्यधिदश१३-नव९-दिग्१०-दश१०-
गजपदवर्णैः८ त्रिपञ्चशशिसंख्या१५३ ॥३७॥

[स्तुतिपदफलम्—]

अथ स्तुतिपदं वक्ष्ये यतेरुत्सर्गकारिताः (तत्) ।
अष्टोत्तरशतं ध्यानमुञ्जनाद्यापि सर्वतः ॥३८॥
आद्ये विशूचिकानाशो ज्वरस्तम्भो द्वितीयके ।
शिरोरोगहृत् तृतीयं तुर्यं नयनरोगहृत् ॥३९॥
परं कर्णार्त्तिनाशाय षष्ठं शूलार्त्तिशान्तये ।
मुनावकथितं७ ज्ञानमष्टमे दूरदर्शिता ॥४०॥

नवमे बहुश्रुतत्वाज्जानाति स्व-परागमम् ।
परे जिनमिताहोभिर्ध्यानाज्जीवितसंविदः ॥४१॥
रुद्रास्येऽष्टयुगाहोभिः पञ्चोपचारपूजया ।
जापो रक्तकणवीरैः काम्यवस्तुसमागमः ॥४२॥
द्वादशेऽथ नमोगामी चन्द्रप्रभजिनालये ।
श्वेतकणवीरजापादायुर्ज्ञानं त्रयोदशे ॥४३॥
चतुर्दशे योजनैकं व्योम्नि याति तप.क्रिया ।
विकथावर्जनं जैनध्यानं सर्वत्र संमतम् ॥४४॥
अप्रतिचक्रायन्त्रे गणभृन्मन्त्रे च विस्तरेणोक्ते ।
दिग्मात्रमत्र दर्शितमिह यन्त्रे पूजनं महासिद्ध्यै ॥४५॥

ॐ ह्रीँ श्रीँ धृति-कीर्ति-बुद्धि-लक्ष्मी स्वाहा ॥

युग४पत्रनाभिपद्मे गर्भे बीजत्रय जिनानुकृति ।
धृत्यादिदलचतुष्के न्यस्य ध्येयं यथार्थसिद्धिरथ ॥४६॥
महोपाध्यायसूरीणामसौ त्रयोदशाक्षरी ।
अनिर्वृत्ययशो-हानि-मोहच्छेदकरी स्मृता ॥४७॥

तथा—

ॐ नमो भगवओ अरिहंतस्स महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महई महाविज्जा ॥ ॐ वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे महानंदणे सिद्धे सिद्धक्खरे सिद्धबीए अणिहए नायघोसे सारवन्ने घोससारे परमे परमसुहए जये विजये जयते अपराजिए मन्वुत्तमे परमपयपयत्ते स्वाहा ॥

ॐ नम इति विद्यान्तैर्वर्णाः शशि-वार्द्धिसंख्यका४१ ज्ञेयाः ।
पञ्च५-चतुष्त्रय४४४-षट्कं६
विषय६-द्वय२-युगरस४४४४४४-त्रयं३ पञ्च५ ॥४८॥
द्वि२-गुण३-त्रय३-पञ्च५-चतुर्मुनिद्विकं४-७-२ द्व्यधिकविंशपदवर्णाः ।
अष्टाष्टौ८८ प्रागक्षरयुक्ता नन्दद्विकेन्दुमिताः ॥४९॥
श्लोकचतुष्टयमेकाक्षराधिक देयमिह महत्तरयोः ।
अतिशयविद्या एताः पदं विना न यतिमात्रे स्युः ॥५०॥

एतन्मध्यात् त्रितयं चतुरस्रे लेख्यमौलिवृत्ततया ।
पूर्वादिद्वारचतुः क्रमादथो वक्ष्यते विद्या ॥५१॥
जिनबीजान्तःप्रणवस्तन्मध्ये ह्रींपुरेऽवशेषं स्यात् ।
पुस्तकसमाप्तिकार्ये साष्टशतं नित्यजापतो रम्यम् ॥५२॥
मायान्तर्जिनबीजं तन्मध्ये ह्रैँपुरेऽवशेषं स्यात् ।
सौभाग्यार्थं नित्यं रक्तध्यानेन साष्टशतजापः ॥५३॥
प्रणवान्तर्जिनबीजं तन्मध्ये ह्रीँपुरेऽवशेषमिह ।
इत्यादिमारिशान्त्यै श्वेतध्यानेन नित्यमष्टशतम् ॥५४॥
मायान्तःप्रणवस्तन्मध्ये जिनपोऽत्र पूर्ववच्छेषम् ।
स्त्रीसीमन्तेऽरुणिते वश्यं नित्याष्टशतजापात् ॥५५॥

शेष शब्देन "ह्रूं ह्रः ह्रौं नमो वर्द्धमानस्वामिने" इति सूच्यते ॥

मध्याक्षराद् वाच्यं तत्राम्नायः परन्तु कार्यवशात् ।
संपुटवर्णा वाच्याः प्रमाणमेकोऽत्र गुरुरेव ॥५६॥
भूमण्डलवेष्ट्यमिदं यन्त्रविधिः पूर्ण एष वक्ष्येऽथ ।
षट्कोणान्तर्विद्याऽक्षरसंख्यापदविशेषेण ॥५७॥

[यन्त्रविधिः—]

षट्कोणान्तर्विद्याक्षराणि संयममितानि१७ तैर्युक्ता ।
षट्कोणलिखितवर्णा एकाधिकसप्तति७१र्भवति ॥५८॥
स्वाहास्थाने अणिहए मा चल चल वृद्धिदे ।
ह्रैँ ह्रीँ सः स्वाहोपाध्याय-महत्तरपदाश्रया ॥५९॥
प्रागुक्तैकोनसप्तत्या६९ युक्ता सप्तदशाक्षरी१७ ।
षडशीत्यक्षराः८६ श्लोकद्वयं शेषं युगद्वयम्२२ ॥६०॥
वर्द्धमानाह्वविद्यानामेतासां वीरजन्मभे ।
उपवासोऽष्टसहस्रं पुष्पाद्यैः सिद्धये जपः ॥६१॥
सान्तः षट्कोणविद्यायां जातीसुमनसां स्मृतः ।
पञ्चदशसहस्राणि१५[०००] जापो होमो दशांशभृत् ॥६२॥

दीपोत्सवेऽथ चैत्रे वा शुद्धत्रयोदशीतिथौ ।
प्रतिवर्षं जातिपुष्पैर्जापोऽष्टाधिसह[स्र]कः ॥६३॥
अलाभे लाभदा किन्तु यन्त्रान्तःप्रतिमोपरि ।
जापः पटादावालिख्य श्रीवीरप्रतिमोपरि ॥६४॥ युग्मम् ॥
दीपोत्सवेऽथ चैत्रे वा शुद्धत्रयोदशीतिथौ ।
उपवासेऽष्टसहस्रं करजापं विधाय तत् ॥६५॥
साष्टशतं शतपत्रैस्तत्संख्यैरक्षतैरथ ।
यन्त्रे श्रीवीरमूर्त्तौ वा वासरानेकविंशतिः ॥६६॥
जपेत् पुष्पाक्षताद्यं तच्चूर्णं वासयुतं गुरुः ।
यस्य मूर्ध्नि क्षिपेत् स स्याद् वश्यो मध्येऽथ गर्भदम् ॥६७॥
सूर्यसंख्यसहस्राणि यन्नाम्ना शालितन्दुलान् ।
शतपत्रैः समं जप्त्वा शुष्कपुष्पाक्षतादिकम् ॥६८॥
सिता-घृत-मधु-क्षीरसंयुतं तद् दशांशतः ।
होमयेदेष आजन्म वश्यो राजादिको भवेत् ॥६९॥
यन्त्रमालिख्य संपूज्य त्रिदिनीं पाय्यतेऽम्बुना ।
रोगदोषहरं दुग्धधौतं वन्ध्यासु गर्भदम् ॥७०॥
सर्वाक्षरमध्याक्षरगर्भगतं साध्यनाम शान्त्यादौ ।
श्वेतादिवर्णयुक्त्या ध्यातं शान्त्यादिकर्मपटुककरम् ॥७१॥
शुक्लं शान्तौ१ पुष्टौ२ वश्याकृष्टौ जपारुणं३ धूम्रम् ।
विद्वेषोच्चाटनयोः४ कृष्णं मृत्यौ५ नभोमयं मुक्तौ६ ॥७२॥
प्रणवो भूरसिभूता धात्री भूमेश्च शुद्धमिति ।
कुरु कुरु स्वाहा प्रसृतिप्रसृतैर्भूमौ गोमयरसैः सिञ्चेत् ॥७३॥
ॐ ह्रीं विमले तीर्थात् जले तदशुचिः शुचिर्भवामि ।
अस्मात् स्वाहा रोहिण्यादिमदेवीभिः कारितस्नानः ॥७४॥

विहिताष्टाङ्गरक्षो नमस्कृत्याष्टसंपदा ।
पूर्वोत्तरामुखो ध्यायेद् विद्यां लीनमना इमाम् ॥७५॥

प्रतिदिनमस्या जापात् प्रयाति हत्यादिकपातकं सर्वम् ।
लभते राज्यसुतादीन् भवत्रयाद् याति मुक्तिपदम् ॥७६॥

श्रीवर्द्धमानविद्यायन्त्रविधिं लिखितवानिहात्मकृते ।
विबुधचन्द्रगणभृत् शिष्यः श्रीसिंहतिलकसूरिरि[द]म् ॥७७॥

इति श्रीवर्धमानविद्याकल्पः संपूर्णः ॥

## श्रीसिंहतिलकसूरिविरचितः

# श्रीवर्द्धमानविद्याकल्पः ॥

[२]

श्रीवीरजिन नत्वा यशोदेव गुरु विबुधचन्द्रम् ।
श्रीवर्द्धमानविद्याकल्प वक्ष्यामि जिनभक्त्या ॥१॥
श्रीचन्द्रसेनपूज्या आचार्यपरम्परागत कल्पम् ।
गणभृन्मन्त्रादेन व्यक्त चमुस्ततश्च तान् स्तौमि ॥२॥
विजितेन्द्रियविषयमना जितदम्भ क्रोध-लोभ-मद माय ।
उभयकुलशुद्धसाधुर्गृहीतसिद्धान्तसारमति ॥३॥
सुविहितयोगोद्वहनो शुद्धाचारो जिनांह्रिगुरुभक्त ।
श्रीवर्धमानविद्याकल्पे योग्योऽय सूरिमन्त्रे च ॥४॥
एतद्वचस्तगुणाय च विद्याकल्प ससूरिमन्त्रमसुम् ।
दत्ते लिप्यैत गुरु स जिनाज्ञाभङ्गदोषेण ॥५॥
सर्वेषा तीर्थकृता२४ कल्याणकधिष्ण्ययुतधिष्ण्यम् ।
अभिषेकहेतु वक्ष्ये विद्या साध्याऽस्तु जैनजन्मर्क्षे ॥६॥
नाभेयस्योत्तराषाढा पञ्चाभिजिच्च मुक्तय ।
अजितस्याथ रोहिण्य पञ्च मार्गं तु सिद्धये ॥७॥
समवस्याथ मार्गाणि पञ्चार्द्रा मुक्तिहेतवे ।
पुनर्वसु(सू)नि तुर्यस्य पञ्च पुष्य तु मुक्तये ॥८॥
सुमते पञ्चपैत्र्याणि सिद्धये पु(पू)वफाल्गुनी ।
पद्मप्रभस्य चित्रा षट् क्वचिदन्यदपि स्मृतम् ॥९॥
सुपार्श्वस्य विशाखा पञ्चानुराधा तु मुक्तये ।
चन्द्रप्रभेऽनुराधा स्यु पञ्च ज्येष्ठा च मुक्तये ॥१०॥
सुविधौ पञ्चमूलानि पूर्वाषाढा शिवास्पदम् ।
शीतले पञ्चपूषा स्यु उषा च मुक्तिहेतवे ॥११॥

श्रेयांसे श्रवणाः पञ्च धनिष्ठा सिद्धिसंशिनी ।
वासुपूज्ये शततारा: पञ्च स्युः पूर्वभा शिवे ॥१२॥
विमलस्योत्तरभद्राः पञ्च सिद्ध्यै च रेवती ।
अनन्ते पञ्चरेवत्यो जाता मुक्त्यर्थमश्विनी ॥१३॥
धर्मस्य पुष्यषट्कं शान्तेः षट् भरणी परम् ।
श्रीकुन्थोः कृत्तिकाषट्कं रेवत्यः षडरस्य च ॥१४॥
पञ्च मल्लेः स्युरश्विन्यो भरणी शिवदायिनी ।
सुव्रतेः श्रवणाः षट् स्युरश्विन्यः षट् नमिप्रभोः ॥१५॥
श्रीनेमिनोऽथ चित्राः षट् यामेये षट् विशाखिका ।
वीरस्योत्तरफाः पञ्च स्वातिर्निर्वृतये मता ॥१६॥
इति विज्ञाय धिष्ण्यानि प्राग्जिनजन्मधिष्ण्यके ।
तदभावेन कल्याणधिष्ण्ये साध्या इमा मुनेः ॥१७॥
साध्याऽथ यस्य विद्याऽस्ति तस्य चैत्येऽतिशायिनि ।
चतुर्थतपसाऽष्टाधिसहस्रं जातिजैः सुमैः ॥१८॥
तमर्चयेत् तु यद्वाऽस्य कराब्जशालितन्दुलान् ।
मुञ्चत्यष्टाधिसहस्रं विद्यालीनमना मुनिः ॥१९॥
सिद्धायामिति विद्यायां सम्यक् तत्त्वभृतां भृशम् ।
इमां कार्ये प्रयुञ्जीत नान्यथेति जैनगीः ॥२०॥
वर्द्धमानोपदिष्टत्वाद् वर्धमानाभिधा इमा ।
इति श्रीवीरचैत्यान्तः सर्वा साध्याऽस्तु सम्मतिः ॥२१॥
सर्वविद्यास्मृतावादौ पूर्णा पञ्चनमस्कृतिः ।
यद्वा पञ्चपदी वाच्या मुनिना प्रणवादिमा ॥२२॥

यदि वा—

नमो जिनावधि१-जिनाः२ परात् सर्वादनन्ततः३-४ ।
अवधिजिनाः केवलिजिनेभ्यो नम इत्यपि २३॥

यद्वा स्तुतिपदीमध्यादादौ पञ्चपदी गुरो. ।
प्राप्य वाच्या याऽपि साऽपि सम्मत महतामिदम् ॥२४॥
पणवो नमो भगवओ अरहओ अमुगस्स सिज्झउ तहा मे ।
अह भगवई अ महई महविज्जा सव्वआइम्मि ॥२५॥

यद्वा—

पणवो नमो भगवओ अरहओ अमुगस्स इत्थ ज विज्ज ।
तह य पउजे सा मे विज्जाउ पसिज्झउ पय वा ॥२६॥
सव्वासिं पज्जते साहाकारो अकुन्नओ नेओ ।
इगवेलसव्वभणणे साहते वीरविज्जाए ॥२७॥
चउवीसदले पउमे मज्झे अरिहेह जस्स पयभत्ती ।
पुव्वाइजुगाइजिणप्पमुहा *नियअक्खण्णजुआ ॥२८॥*
पणवोऽरिहस्स नामे चउत्थइगवयणमतिमाइपय ।
*तस्सतिनमो दिट्ठा विज्जा अह भिन्नपत्तेसु ॥२९॥*
[अ]रिहस्स दुण्णि विज्जा दिट्ठा मह तह वि इत्थ दसेमि ।
*एग जेण गुरूहिं भणिअ वीरस्स विज्जदुग ॥३०॥*

ॐ ऋषभाय नम· ॥

ॐ नमो अरिहताणं इत्यादि पूर्णौ यद्वा पदानि पञ्च ॥ यद्वा, ॐ नमो जिणाणं १, ॐ नमो ओहिजिणाणं २, ॐ नमो रमोहिजिणाण ३, ॐ नमो सव्वोहिजिणाण ४, ॐ नमो *अणतोहिजिणाणं ५, ॐ नमो केवलिजिणाण ६, ॐ नमो भगवओ अरिहओ उसभसामिस्स* सिज्झउ मे भगवई महई महाविज्जा । ॐ नमो भगवओ अरिहओ उसभसामिस्स आइतित्थ गरस्स जस्सेअ जल त गच्छइ । चक्क सव्वत्थ अपराजिअ । आयाविणी ओहाविणी मोहणी थंभणी जंभणी हिलि हिलि कालि कालि चोराणं भडाण भोइआण । अहीणं दाढीण नहीण सिंगीण वेरीणं जक्खाणं पिसायाणं मुहबधणं दिट्ठिबधण करेमि ठ ठ स्वाहा ॥

प्राकृतसस्कृतबन्धाद् भवन्ति विद्यापदानि भग्नानि ।
ज्ञात्वेत्यत्र न यन्ध कृतो मया स्वात्मसदृशबोधाय ॥३१॥
प्रागुक्तजापसिद्धौ पथि भीतौ राजकादिवैषम्ये ।
वसतिकुलसघवस्त्राद्युपकरण त्रातुमिह सुयत्ति ॥३२॥

एकयुगमितां विद्यां स्मृत्वा धूलीमुतैप कर्करकान् ।
क्षिपति दिगष्टकसंमुखमथवा ग्रन्थिं निजे वस्त्रे ॥३३॥

आदिजिनधर्मचक्रच्छायावृतमत्र रक्ष्यमनुचिन्त्य ।
तद्धर्मचक्रधाराऽभिहितश्चिन्त्यश्च शत्रुगणः ॥३४॥

इति प्रथमा विद्या ॥

ॐ अजिए अपराजिए अणिहए महाबले लोगसारे ठः स्वाहा ॥

दारिद्र्य-व्याधिहरः पुत्र-यशः-पुण्य-लाभ-सौभाग्यम् ।
दत्ते युगलप्रीतिं शश्वज्जापोऽष्टशतमस्याः ॥३५॥

इति द्वितीया विद्या ॥

ॐ संभवे महासंभवे संभूए महासंभावणे ठः ठः स्वाहा ॥

फल-कुसुमाक्षत-दलसिद्धार्थैर्दत्तैर्गजाष्टशतजप्तैः ।
चलिगन्धतैलाभ्यङ्गाद् वश्यं तु शाम्भवीविद्या ॥३६॥

इति तृतीया विद्या ॥

ॐ नंदणे अभिनंदणे सुनंदणे महानंदणे ठः ठः स्वाहा ॥

जलमभिमन्त्र्याष्टशतं प्रक्षाल्य मुखं यदन्तिके स्वेन ।
गम्येत स वश्यः स्यादित्यभिनन्दनजिने विद्या ॥३७॥

इति चतुर्थी विद्या ॥

ॐ नमो सुमए सुमई सुमणसे सुसुमणसे ठः ठः स्वाहा ॥

अभिमन्त्र्याष्टाधिशतं निजकं शयतस्त्रिकालभाव्यर्थम् ।
आत्मार्थं तथ्यमसौ पश्यति सा पञ्चमी विद्या ॥३८॥

इति पञ्चमी विद्या ॥

ॐ पउमे महापउमे पउमुत्तरे पउमुप्पले पउमसरे पउमसिरि ठः ठः स्वाहा ॥

अष्टशतमभिमन्त्रितसरोजपाणिर्जनेषु सौभाग्यम् ।
पद्मं तदर्प्यते वा यस्यासौ वश्यतामेति ॥३९॥

इति षष्ठी विद्या ॥

ॐ पासे सुपासे अइपासे सुहपासे महापासे ठः ठः स्वाहा ॥

अभिमन्त्र्य वपुः शेते विजने स्वप्ने शुभाशुभं वेत्ति ।
अस्पृश्यः सर्पादिर्व्याघ्रादेः पथि च सप्तमिका ॥४०॥
इति सप्तमी विद्या ॥

ॐ चंदे सुचंदे चन्दप्पहे सुप्पहे अइप्पहे महाप्पहे ठः ठः स्वाहा ॥
सप्ताभिमन्त्रितपयोधौतमुखः सुभग एव एकयुगम् ।
अभिमन्त्र्य यस्य मुकुरो दर्श्यो वश्यः स इति चान्द्री ॥४१॥

यद्विा,

चन्द्रप्रभबिम्बाग्रे मुकुरं संपूज्य पृच्छयते कन्या ।
पश्यति च यथावस्थितमेषा ब्रूतेऽथ तत्कथितम् ॥४२॥
इत्यष्टमी विद्या ॥

ॐ पुप्फे पुप्फे महापुप्फे पुप्फदंते ठः ठः स्वाहा ॥
सिद्धार्थकं पत्रफलपुष्पाद्यष्टशतजप्तम् ।
अथ सकलं जिनं सप्तं दत्तं यस्मै वश्योऽसौ ॥४३॥
[इति] सुविधिजिन विद्या ९ [नवमी]॥

ॐ सीयले पासे पसंते निव्वुए निव्वाणे निव्वुइ त्ति नमो भगवईए ठः ठः स्वाहा ॥
श्रवणाक्षि-कुक्षिमूर्ध्ना शूलं स्फोटीं गडुं व्रणं सिञ्चेत् ।
एकयुगजप्तपाथोधाराभिर्दशमाजिताविद्या ॥४४॥
इति दशमी विद्या ॥

ॐ सिज्जंसे सिज्जंसे सुसिज्जंसे सुसिज्जंसे सेयंकरे महासेयंकरे पहंकरे सुपइंकरे ठः ठः स्वाहा ॥

भूतेष्टायां रात्रौ सरजोपलिकर्मे साष्टशतजापम् ।
कुर्यान्मोच्यं च यद्भिः सत्वरमश्चन्द्रशशिविद्या ॥४५॥
इति एकादशी विद्या ॥

ॐ वासुपुज्जे वासुपुज्जे महापुज्जे अइपुज्जे पुज्जरिहे ठः ठः स्वाहा ॥
परिजप्याष्टाधिशतं शयति स्वप्ने निरीक्षते यदसौ ।
तत सर्वं शुभमशुभं सत्यं स्याद् द्वादशीविद्या ॥४६॥

विशेषश्च,

द्वादशारं लिखेच्चक्रं तत्र सृष्ट्या लिखेदिदम् ।
अन्तः श्रीवासुपूज्यस्य प्रतिमाऽन्यजिनस्य वा ॥४७॥
ॐ नमो भगवते [वा] ? वासुपूज्याय पट्टके ।
विलिख्य चन्दनेनैव तत्पूज्यं पूर्णिमानिशि ॥४८॥
तदाद्या द्वादशमासाः क्रमेणानेन सूत्रयन् ।
मासे मृतिरियं विद्या पुरोक्ता द्वादशाक्षरी ॥४९॥

१२ [इति द्वादशी विद्या] ॥

ॐ अमले विमले कमले कमलिणी निम्मले ठः ठः स्वाहा ॥

सप्ताभिमन्त्रितसुमैः प्रतिमां संपूज्य तिष्ठति स्वकृते ।
तत्रस्थः पश्यति यः सत्यार्थः स इति विमलजिनविद्या ॥५०॥

१३ [इति त्रयोदशी विद्या] ॥

ॐ नमो अणंते केवलनाणे अणंते पज्जवानाणे अणंतेगमे अणंते केवलदंसणे ठः ठः स्वाहा ॥

शास्त्रारम्भे जप्त्वा साष्टशतं शयत एष यत्स्वप्ने ।
पश्याति तत्सर्वमिदं तथैव तदनन्तजिनविद्या ॥५१॥

१४ [इति चतुर्दशी विद्या] ॥

ॐ धम्मे सुधम्मे धम्मचारिणि सुअधम्मे चरित्तधम्मे आगमधम्मे धम्मुद्धरणी धम्मधम्मे उवएसधम्मे ठः ठः स्वाहा ॥

शिष्याचार्याद्यर्थे कायोत्सर्गे जपन्निमां विद्याम् ।
पश्यति शृणोति यदसौ तत् सत्यं सर्वमेव पञ्चदशी ॥५२॥
कार्यारम्भे शिष्यश्रवणो विद्याभिमन्त्रितोऽष्टशतम् ।
कार्यस्य पारदर्शी विशेषतोऽप्यनशनग्राही ॥५३॥

१५ [इति पञ्चदशी विद्या] ॥

ॐ संति संति पसंति उवसंति सव्वं पावं उवसमेहि ठः ठः स्वाहा ॥

देश-पुर-ग्रामरुजां कुल-गो-हय-नर-नृपादि-मारीषु ।
अष्टशतमभिमन्त्रितधूपाग्निमगन्धतः शान्तिः ॥५४॥

कर्पूर-चन्दनरसैः पात्रे विद्यामिमां विलिख्यान्तः ।
पूज्यः शतपत्रसुमैः श्रीशान्तिः सर्वशान्तिकरः ॥५५॥
[इति] षोडशी विद्या ॥

ॐ कुंथुं दुकुंथे शुकुंकुथे कीडकुंथुमई ठः ठः स्वाहा ॥
सप्ताभिमन्त्र्यपांशुर्य प्रति विक्षिप्यते भवेत् तस्य ।
ग्रह-रोग-ज्वरदोषोपशान्तिरेषेति सप्तदशी ॥५६॥
[इति सप्तदशी विद्या] ॥

ॐ अरणी आरणी आवरणी सयाणिए ठः ठः स्वाहा ॥
राजकुलं देवकुलं वादे वा गन्तुमिच्छता विद्याम् ।
परिजप्य पयःपेयं वक्त्रं वाऽभ्यज्य गन्धतैलेन ॥५७॥
बद्ध्वा शिरसि शिखां वा सिद्धार्थान् वा स्वनिवसनप्रान्ते ।
गन्तव्यं यत्रेष्टं सुभगस्तत्रेति चन्द्रगजविद्या ॥५८॥
१८ [इत्यष्टादशी विद्या] ॥

ॐ मल्लि सुमल्लि महामल्लि जयमल्लि अप्पडिमल्लि ठः ठः स्वाहा ॥
अष्टशतमन्त्रजप्तं वस्त्रालङ्कारमाल्यफलमुख्यम् ।
दीयेत यस्य वश्यः सोऽवश्यं मल्लिजिनविद्या ॥५९॥
१९ [इत्येकोनविंशतिविद्या] ॥

ॐ सुव्वए महासुव्वए अणुव्वए महा(ह)व्वए वई महदिवादित्ये ठः ठः स्वाहा ॥
व्याघ्र-चित्रक-सिंहादेः कस्यचिन्मांसभक्षिणः ।
दग्ध्वा मांसं च केशं वा तद्रक्षाभ्रक्षिताङ्गुलिः ॥६०॥
यस्य नाम्ना जपेद् विद्यामिमामष्टोत्तरं शतम् ।
सहस्रं वा स वश्यः स्यादिति सुव्रतविद्यया ॥६१॥
२० [इति विंशति विद्या] ॥

ॐ नमि नमि नामिणि नमामिणि ठः ठः स्वाहा ॥
सप्ताष्टाधिशतं वा विद्याजप्तं सुवस्त्रशृङ्गारम् ।
पुष्पादि यस्य दत्तं वश्यः स स्यान्नमेर्विद्या ॥६२॥
२१ [इत्येकविंशति विद्या] ॥

ॐ रहे रहावत्ते आवत्ते वत्ते अरिट्ठनेमि ठः ठः स्वाहा ॥

हयं गजं रथं नावं साष्टशताभिमन्त्रितम् ।
आरोहेद् वाहनं वश्यं वैरी वा वशगो भवेत् ॥६३॥

नित्यजापाद् रथावाप्तिर्नाशिवं स्याद् द्वयात्रि(त्रि?)कम् ।
प्लाद्यं युगाङ्गुलं कीलं स्थापयेदभिमन्त्रितम् ॥६४॥

नद्यास्तीरे च संपूज्य गन्धाद्यैः सुतरां नदीम् ।
निर्दोपं च शिखाबन्धे विद्या नेमिजिनाश्रया ॥६५॥

विशेषश्च,

ॐ नमो भगवओ अरिट्ठनेमिसामिस्स अरिट्ठेणं बंधेणं बंधामि भूयाणं जक्खाणं रक्खसाणं वितराणं चा(चो)राणं चोरिआणं साइणीणं वालाणं दाढीणं नहीणं महोरगाणं अन्ने वि जक्खे वि मज्झ दुट्ठा संभवंति तेसिं सव्वेसिं मणं बंधामि दिट्ठिं बंधामि यः यः यः यः ठः ठः ठः ठः हुं फट् स्वाहा ॥

करजापोऽयुतमस्याः सितसुमजापोऽयुतमितः सिद्धा ।
सर्वार्थकरी विद्या श्रीनेमिजिनांह्रिभक्तस्य ॥६६॥

२२ [इति द्वाविंशति विद्या] ॥

ॐ उग्गे महाउग्गे उग्गजसे पासे पासे सुपासे पासमालिणि ठः स्वाहा ॥

देश-पुर-ग्रामादेः कोष्ठागारस्य धूप-बलिकर्म ।
कार्यं शिवं च सरुजां शान्तिर्बहुधनमपधनस्य ॥६७॥

द्विपदं चतुष्पदं वाऽभिमन्त्रणाद् वश्यमथ धनं निहितम् ।
सुप्रापं युधि विजयः स्वार्थकृतिः पार्श्वविद्येयम् ॥६८॥

विशेषश्चात्र,

ॐ उग्गे उग्गे महाउग्गे गामपासे नगरपासे पासे सुपासे पासमौलिणि ठः ठः स्वाहा ॥

श्रीपार्श्वजिननक्षत्रे मूलधिष्ण्येऽथ पार्श्वकम् ।
जातीपुष्पसहस्रेण शालिभिस्तन्मितैरुत ॥६९॥

संपूज्योपविशेत् सद्भावस्याः कार्योदये जिनम् ।
संपूज्याष्टशतं पुष्पैः कायोत्सर्गे दृढव्रतः ॥७०॥

विद्या प्रजपन्नन्त साक्षाद् भूताश्वसेनजः ।
कार्ये शुभाशुभादेशं शृणुते सत्यमेव तत् ॥७१॥

२३ इति त्रयोविंशति विद्या ॥

उ नमो भगवओ महइ वद्धमाणसामिस्स, सिज्झउ मे भगवई महइ महाविज्जा, उ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे, जए विजयन्ते अपराजिए अणिहए ठ ठ' स्वाहा ॥

सुवासाननया जप्तान् शिष्यमूर्ध्नि गुरु' क्षिपेत् ।
स्वकार्यपारग स स्यादपविघ्नमिहान्तिमा ॥७२॥

[विशेषश्चात्र,]

उ नमो भगवओ अरहओ वद्धमाणस्स सुर असुर तेलुक्कपूइअस्स वेगे वेगे महावेगे निद्धंतरे निरालंबि विसि विसि फुहि फुहि उयरंते पविसामि। अंतरद्धिओ भवामि मा मे पविसंतु पावगा ठ ठ स्वाहा ॥

पथि युद्धे द्युते वा स्मरणादपराजितोऽथ चौराणाम् ।
व्याघ्रादीना भीतौ सुप्तैर्बन्धे भवति शान्ति ॥७३॥
स्वाहा विना ठशब्द ठयुगस्वाहा वदन्ति केचिदिह ।
ठयुगस्वाहास्थाने ह्रीं नम इति केचिदप्याहु ॥७४॥
श्रीवीरमन्त्रयुगल विद्यैकाऽथ मुख्यतोऽन्येषाम् ।
लिखिता वक्ष्याम्यधुना वीराश्रयकमपि मन्त्रगणम् ॥७५॥
पणवो नमो भगवओ महइ महावीरवद्धमाणस्स ।
सिज्झउ लहु भगवई महई परओ महाविज्जा ॥७६॥

उ वीरे वीरे महावीरे महावीरे सुवीरे जयवीरे ससेणवीरे वद्धमाणवीरे जयन्ते अपराजिए स्वाहा। यद्वा, वीरे वीरे महावीरे जयवीरे सेणवीरे जयन्ते अपराजिए स्वाहा ॥

२४ इति चतुर्विंशति विद्या ॥ श्रीवर्धमानविधेयम् ॥

उपाया सोपवासेन श्रीवीर जातिकाकुसुमै ।
अष्टोत्तरसहस्रेण तन्दुलैरुत पूज्यते ॥७७॥
अस्या सिद्धौ शुचिर्भूत्वाऽभिमन्त्र्य मुखमेतया ।
यत्र गच्छति तत्र स्यादेष सर्वजनप्रिय ॥७८॥

सोपवासो जिनं स्मृत्वा तन्दुलानभिमन्त्रितान् ।
कोष्ठागारे क्षिपत्येष वर्धते हीयते न सः ॥७९॥
आत्मानमभिमन्त्र्यैष सर्वान् भोजयते स्वयम् ।
अन्नं प्रवर्द्धते आत्मभोजने न तु हीयते ॥८०॥
अभिमन्त्र्य मुखं कर्णावेतया शयितो निशि ।
स्वप्ने शुभाशुभं कार्योपदेशं लभते व्रती ॥८१॥
अभिमन्त्रितसर्वाङ्गो द्युते वादे रणादिषु ।
अजेय इति विद्याः श्रीगौतमादिक्रमागताः ॥८२॥

तथा, ॐ सुसिद्धेभ्यः । ॐ नमो वद्धमाणस्स सिंधुले भयवादवीरे महावीरे अजिए अपराजिए स्वाहा ॥

पूर्वकायामभुक्त्या श्रीवीरं साष्टसहस्रतः ।
जातिपुष्पैस्तन्दुलैर्वा पूजयत्येष सिद्ध्यति ॥८३॥
श्रवसी अभिमन्त्र्यैष स्वे वारानेकविंशतिम् ।
शयीत स्वप्नतो वेत्ति जीवितं मरणं नृणाम् ॥८४॥

तथा, पणवो नमो भगवओ महइ ॥ ॐ वीरे वीरे महावीरे जयवीरे वद्धमाणवीरे अणिहए मा चल मा कर वृद्धिदे स्वाहा ॥

अ-सि-आ-उ-सेति विद्या ध्येया चिन्तामणीयमत्रोक्ता ।
चिन्तामणिरिव दत्ते यथेप्सितं प्रस्तुतं वच्मि ॥८५॥
परमेष्ठिपञ्चककृते चतुरधिविंशतिदले स्वनाभ्यब्जे ।
पूर्वादिदल[२४]क्रमतश्चन्द्राभः सुविधिरर्हन्तः ॥८६॥
पद्माभवासुपूज्यौ सिद्धाः षोडश१६सुवर्णभाः सूरिः ।
मल्लिः पार्श्वोऽधीती सुव्रत-नेमी च साधुपदे ॥८७॥
संस्थाप्य जिनानेवं गर्भे स्वात्माऽथ कुण्डलीरूपः ।
विद्यारम्भे पूर्वं पञ्चपदीं स्मरति जिनमूर्त्तिम् ॥८८॥

यद्वा,

अष्टदलहृदयपद्मे[८] पूर्वाद्यष्ट क्रमाज्जिनाः[२४] स्थाप्याः ।
अर्हत्-सिद्धाऽऽचार्योपाध्याय[१६]-यतिक्रमास्त्रिमिताः ॥८९॥

इति वर्द्धमानविद्या परमेष्ठिमयीह सूरिविद्येव ।
ध्येया देया च परं योग्याय श्रीजिनाज्ञैया ॥९०॥
एतास्तु पाठसिद्धा दृढव्रतानां जिनाभिधादेव्यः ।
विद्याधिष्ठात्र्योऽमूर्निजनिजनामे जिने भक्ताः ॥९१॥
एतद्विद्यावलयं जिनसहितं सूरिमन्त्रयन्त्रेऽपि ।
दृष्टमिदं सातिशयं स्मरणादिह चन्द्रसेनपूज्यानाम् ॥९२॥
अक्षरसंज्ञानकृता प्रतिदोषाद् गुरुवशाच्च येनात्र ।
हीनाधिकवर्णाः स्युः किन्तु त्रि[:] परीचितुं लिखितुम(ताः) ॥९३॥
श्वेतादिवर्णयुक्त्या परमेष्ठिमहांसि सर्वविद्यानाम् ।
सर्वाणि पदानि यतो वश्याद्यं कर्मषट्कमिह कुर्युः ॥९४॥
इत्यवचिन्त्य बहुश्रुतमुखाम्बुजेभ्यो मयाऽऽत्मने लिखितः ।
श्रीवर्द्धमानविद्याकल्पस्त्रि-द्वि-त्रिकेन्दु(१३२३)मिते वर्षे ॥९५॥
श्रीविबुधचन्द्रगणभृतशिष्यः श्रीसिंहतिलकसूरिरिमम् ।
साह्लाददेवतोज्ज्वलविशदमना लिखितवान् कल्पम् ॥९६॥

इति श्रीसिंहतिलकसूरिकृतौ श्रीवर्धमानविद्याकल्प. ॥

# श्रीवर्द्धमानविद्याकल्पे

## यन्त्रलिखनविधिः ॥

वक्ष्याम्यथानुपङ्गात् प्रणवपरमेष्ठिसिद्धपदमेकम् ।
पंच इलं पंच इलं जावज्जीवं तु तह अहिणा ॥१॥
न डसीअइ प्रदीपात् पर्वण्यस्याष्टयुतशतस्मृत्या ।
वर्षं यावत् सर्पेर्न हि दश्यः सूरिमन्त्रोऽयम् ॥२॥
अस्यायुतं च जातीकुसुमैर्जापो दशांशतो होमः ।
आत्माऽग्निः कुण्डगतो वृद्धाचार्यैः सुधासिक्तः ॥३॥
शैत्यं नीतो ध्यानं सिद्धः पश्चादनशनतोऽष्टशतम् ।
जापे स्वप्ने अर्थं धान्यरसे भावितं दिशति ॥४॥
करजापेऽयुताद् यद्वा सिद्धः कार्ये जनोज्झिते ।
जापे साष्टशतं स्वप्ने सूरिमन्त्रोऽर्थदेशकः ॥५॥

तथा,

परमेष्ठिपञ्चपद्यामादावोमं ततो जभमहक्षाः ।
कूटाः क्रमतः प्रतिपदमेकः कूटान्नमश्च सर्वेषु ॥६॥
अम्बुधिहृत्पद्मे मध्येऽर्हन् शेषकेषु सिद्धाद्याः ।
तत्र जिनाश्चन्द्रप्रभ-सुविधिमुखाः पूर्ववद् वाच्याः ॥७॥
क्षित्यादितत्त्वपञ्चकमत्र क्रमशश्च शुद्धिरथ शान्तिः ।
वश्योच्चाटन-मारणमिति शशिनिभजैनवर्णादेः ॥८॥
कुर्वीत पूर्वके सत्याकृष्टिं कुम्भके तथा स्तम्भम् ।
उच्चाटनं च योगी रेचकतो जीवतीति मृतौ ॥९॥
शतपत्रपञ्चशत्या प्रपूज्य वामेयमूद्र्ध्ववामभुजः ।
दक्षिणभुजपञ्चशतीमन्त्रोपदेशः स्यात् ॥१०॥

उक्तं च—

जिनस्तुतिमयं महो जभवबीजाक्षरै-
मलादियुतिसंयुतैः सहितमन्तरं चिन्तयेत ।
जल-ज्वलन-शाकिनी-गरलभीतिहीनं सदा
शुभोदयनिबन्धनं जगति ते लभन्ते फलम् ॥११॥

सप्तत्यधिशतयन्त्रं मन्त्रेणानेन सुरभिकुसुमशतैः ।
जप्त्वा त्रिदिनीं पयसा धौतं पीतं ज्वरादिहरम् ॥१२॥

इत्यवचित्य(न्त्य) बहुश्रुतमुखाम्बुजेभ्यो मयाऽऽत्मसंस्मृत्यै ।
श्रीवर्द्धमानविद्यामन्त्रयुतं लिखितमिह किञ्चित् ॥१३॥

इति श्रीविबुधचन्द्रसूरिशिष्य-सिंहतिलकसूरिकृते
वर्द्धमानविद्याकल्पे यन्त्रलिखनविधि ॥

दक्षिणावर्त्तस्याक्षस्याग्रे ॐकारलक्षत्रयं गण्यते। तत्राद्यो लक्षो घनसारेणाक्षं पूरयित्वा, द्वितीयो मृगमदेन, तृतीयो दुग्धेन। एवं लक्षत्रयं करजापः श्वेतवासःपरिधानम् श्वेतकुसुमैः पूजा। कार्योत्पत्तौ सहस्रमेकं गण्यते सर्वकार्यसिद्धिः श्रीकृते घनसारेण वश्ये मृगमदेन च। श्रयोऽर्थं गोदुग्धेन अक्षस्तु सेरार्द्धं यावन्मध्यमः। तदूर्ध्वं महाभाग्येन लभ्यते। एते दृष्ट-प्रत्ययत्वात् प्रयोगा लिखिताः॥

ॐ नमो भगवओ महइ महावीरवद्धमाणसामिस्स० अपराजिते स्वाहा॥

प्रातरवश्यं वार ८, २१, १०८ स्मृत्वा भुञ्जीत। एतत्प्रभावात्—

सौभाग्ययापदां नाशः राजपूजां।श्रियां पतिः।
दीर्घायुःशाकिनीरक्षा सुगतिश्च भवान्तरं॥१॥

ॐ नमो चउवीसाए तित्थंकराणं, ॐ नमो तित्थस्स ॐ नमो सुअदेवीए भगवईए, ॐ नमो सुअकेवलीणं, ॐ नमो सव्वसाहूणं, ॐ नमो अरहओ भगवओ सिज्झउ मे भगवई० स्वाहा॥

वद्धमाणविद्या चउत्थं काऊण जप्तव्या वार १०८। तथा गोरोचन[1]-चन्दन[2]-केसर[3]-जातिफल[4]-कस्तूरी[5]-कर्पूर[6]-कुङ्कुम[7]-एतच्चूर्णं क्रियते। अनुकूले चन्द्रे प्रीतौ सौभाग्ये वा योगे वार १०८ अनया वर्द्धमानविद्ययाऽभिमन्त्र्यते। तच्चूर्णं ग्रन्थौ बद्ध्वा ध्रियते। वासाक्षतयोर्मध्ये तच्चूर्णमध्यात् कणमेकं प्रक्षिप्य यस्य शिरसि दीयते स वशी नीरोगश्च भवति। अथवा वार १०८ अभिमन्त्र्य तिलकं कृत्वा हृदये वा राजकुलादौ राजाऽनुकूलो भवति, कार्यकारी च।

ॐ ह्रीँ नमो जिणाणं इत्यादि यावद् बुद्धि-लक्ष्मी स्वाहा॥ अयं मन्त्रः प्राग् लिखितोऽस्ति।

अस्य मन्त्रस्य क्रिया सुप्तिकाले हस्त-पादान् प्रक्षाल्य प्रधानश्रीखण्डेन कर्पूरमिश्रेणात्म-शरीरे भूहरि कृत्वा एकान्ते संस्तारके उपविश्य कर्णौ वार १०८ जपित्वा (प्त्वा) मौनं कृत्वा कार्यं चिन्तनीयं स्वप्तव्यम्। ततः स्वप्ने शुभाशुभं कथयति। नात्र संदेहः कार्यः किन्तु भक्तिबहु-मानेन पूजनीयः। जातिपुष्पैः सहस्र १२००० जापः। कर्पूरागरुकस्तूरीप्रभृतिभोंग इति प्राक्सेवा

ॐ नमो वीरे वीरे विजए अतुलबलपराक्रमे भगवति वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जयंते अपराजिए। ॐ इलि इलि किलि किलि परि परि सरि सरि ॐ वीरविजयी स्वाहा॥

सदा ध्येया वार ७ अथवा २१॥

ॐ नमो भगवओ अरहओ सिज्झउ मे भगवई महइ महाविज्जा अह आइए अजईए महईए अपराजिए एणइए वद्धमाणईए अपराजईए आह आः स्वाहा॥

उवयारो चउत्थभत्तेण जावो अट्ठुत्तरसहस्सं वार ३ अथवा वार ७ वासा अहिवासिज्जंति॥

---

१ वीर इत्यादि बीजपदानि कनकपीतध्यानेन सौभाग्यर्थम्, अत एव सौभाग्यविद्यामध्यात् श्रीवज्रस्वामिनो-द्धृतानि इति पाठः॥

तीर्थश्रुतसंघप्रत्यनीकमध्ये ।

ॐ नमो अरहंताण ह्रॉं हृदये, ॐ नमो सिद्धाणं ह्रीँ शिरसि, ॐ नमो आयरिआणं ह्रूं शिखायाम्, ॐ नमो उवज्झायाणं ह्रौँ कवच (चे), ॐ नमो लोए सव्वसाहूणं ह्रः अस्त्रं आत्मरक्षा ॥

इति वर्द्धमानविद्यासंप्रदाय ॥ ११

प्रथमा वर्द्धमानविद्या ।

ॐ ह्रीँ अर्हं नमो जिणाणं १ । ॐ ह्रीँ नमो ओहिजिणाणं २ । ॐ ह्रीँ नमो परमोहिजिणाणं ३ । ॐ ह्रीँ नमो सव्वोहिजिणाणं ४ । ॐ ह्रीँ नमो अणंतोहिजिणाणं ५ । ॐ ह्रीँ नमो कुट्ठबुद्धीण ६ । ॐ ह्रीँ नमो पयाणुसारीणं ७ । ॐ ह्रीँ नमो संभिन्नसोआणं ८ । ॐ ह्रीँ नमो चउदसपुव्वीण ९ । ॐ ह्रीं नमो अट्ठंगनिमित्तकुसलाणं १० । ॐ ह्रीँ नमो विउव्वणइड्ढिपत्ताण ११ । ॐ ह्रीँ नमो विज्जाहराणं १२ । ॐ ह्रीँ नमो पन्नासमणाणं १३ । ॐ ह्रीँ नमो आगासगामिणीण १४ । ॐ ह्रीँ ह्रोँ ह्रौँ ह्रः स्वाहा । ॐ ह्रीँ श्री-ह्री-धृति-कीर्ति-बुद्धि-लक्ष्मी स्वाहा ॥

*द्वितीया वर्द्धमानविद्या ॥*

ॐ नमो जाव महाविज्जा ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे महानंदणे सिद्धे सिद्धक्खरे सिद्धवीए अणिहए नायघोसे सारवण्णे घोससारे परमे परमसुहगे जए विजए जयन्ते अपराजिए सव्वुत्तमे परमपयत्ते स्वाहा । एआए विज्जाए समणसमणीनिस्समणमहिमं काउकामेण १०८ जावेण सिद्धा हवइ । चतुर्थोपवासेन यन्त्रस्याग्रे स्मरणीया। नित्थारगपारगो हवइ । उट्ठावणिगणिजोगे वा निविग्घो उत्तमट्ठं आराहेइ । सूरो संगामे अपराजिओ हवइ । विद्याविधानं कथितं सुहम्मसामिगणहरेण वर्द्धमानविद्यात्रय कथितम् ॥१२

ॐ नमो अरहंताण । ॐ नमो सव्वसिद्धाणं । ॐ नमो आयरियाणं । ॐ नमो उवज्झायाण । ॐ नमो सव्वसाहूण । ॐ नमो आगासगामीण ॐ ह्र क्ष नम ॥

शुचिविद्या ॥

ॐ नमो अरहंताण ह्रॉं हृदये इत्यादि पाश्चात्य आत्मरक्षा अत्र स्थाने लेख्या ॥

ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिने (न्!) एह्येहि सवौषट् आह्वानम् १ ॥ ॐ ह्रीँ नमोऽस्तु भगवन्! वर्द्धमानस्वामिन्! तिष्ठ तिष्ठ ठ ठ स्वाहा, स्थापनम् २ ॥ ॐ ह्रीँ नमोऽस्तु भगवन्! वर्द्धमानस्वामिन्! मम सन्निहितो भव वषट्, सन्निधानम् ३ ॥ ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिन्! पूजान्त यावदत्रैव स्थातव्यम्, सन्निरोध ४ ॥ ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिन्! परेषामदृश्यो भव, अवगुण्ठनम् ५ ॥ ॐ नमोऽस्तु भगवन् वर्द्धमानस्वामिन्! गन्धादीन् गृहाण, नम पूजा ६ ॥ तत पञ्चसु महावीरकल्याणेषु प्रत्येक

सहस्रमेकं चतुर्थं कृत्वा जपेत्। महाविद्यया वार २१ चन्दनमभिमन्त्र्य दक्षिणकर्णं खरण्टयेत्। ततोऽष्टोत्तरशतं जपेद् उपदेशविषये ॥

ॐ नमो भगवओ महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महइ महाविज्जा ॥ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजए जयन्ते अपराजिए अणिहए मा चल चल वृद्धिं देहि ह्रीँ सः स्वाहा ॥ वर्द्धमानविद्या सर्वकर्मकरी ॥

शुचिः कृतोपवासोऽष्टोत्तरसहस्रं १००८ जपेत्। अखण्डशिवनिपट्टे गोशीर्षचन्दनेन लिखित्वा पट्टे वा कुङ्कुमाद्यैर्लिखित्वा जातिकुसुमैः श्वेताक्षतैर्वाऽष्टोत्तरसहस्रमितैरनया प्रत्येकमेकशो जप्तैः प्रपूजयेद् विद्यामिमाम्। ततः सिद्धा भवति। अनया सप्ताभिमन्त्रितैर्वासै [:] श्रावकादिशिरसि क्षिप्तैस्तपोनिर्वाहो भवति। व्याख्याने विवादे जयो भवति नात्र संशयः ॥

ॐ ह्रीँ नमो अरिहंताणं० इत्यादि पद ५। ॐ नमो भगवओ अरिहओ महावीरस्स, सिज्झउ मे भगवई महइ महाविज्जा। वीरे वीरे महावीरे सेणवीरे वद्धमाणवीरे जए विजए जयंते अपराजिए अणिहए मा चल चल सिद्धिदे ॐ ह्रीँ सः स्वाहा, अक्षर ३१। नान्दी अक्षर ३४। सौभाग्यपदम् अक्षर २। वीजपदम् अक्षर २। समाप्तिपदम् ४। होमपदं ४। एवं अक्षर ६९ इति मन्त्रशुद्धिः। नान्दी श्वेतध्यानेन कर्मक्षयाय शान्तौ च। सौभाग्यपदानि तध्यानेन ऋद्धये सौभाग्याय च। ॐ नीलध्यानेन लब्धये, ह्रीँ रक्तध्यानेन वशीकरणम् ाहा होमे, वासक्षेपो होतव्यद्रव्याणि ॥

श्रीवीरकल्याणे उत्तरफाल्गुन्यां स्वातौ च उपवासं कृत्वा वर्द्धमानविद्यासहस्रं जपेत तत द्ध्यति। ततः शतपत्रिकापुष्प १०८, तन्दुल १०८ उभयेषामपि जापः १०८, पृथक् पृथक् दिन २१ यावत्। ततो द्वयेषामपि चूर्णं कृत्वा आदौ क्षीरवृक्षे वासक्षेपः, ततस्ते वासा यस्य शिरसि क्षिप्यन्ते स वश्यो भवति। वर्द्धमानविद्या ग्रामप्रवेशे वार २१ जपित्वा प्रवेष्टव्यम् तवं भव्यम्, पूजालाभश्च भवति ॥

इति वर्द्धमानविद्यासिद्धिः ॥

ॐ ह्रीँ श्रीँ ज्रीँ क्ष्रीँ कलिकुंडे कलिकुण्डदण्डे देवदत्तस्यापातरक्षणे अप्रतिहतचक्रे ॐ ह्रीँ वीरे वीरे जयवीरे सेणवीरे वद्धमाणवीरे जयंते अपराजिए अणिहए स्वाहा। वा २१ अथवा १०८ सर्वकार्येषु अभिमन्त्र्याक्षता ग्रन्थौ बद्ध्यन्ते सर्वे प्राणता भवन्ति ॥

आम्नायान्तरे ॐ नमो भगवओ अरहओ इत्यादि यावत् मा चल चल वृद्धिदे ह्रीँ ह्रीँ सः स्वाहा ॥ अस्मिन् आम्नाये श्लोक २ अक्षर १५ चतुर्थेन साध्यते। व्रतदानोपस्थापना गणियोग-प्रतिष्ठोत्तमार्थप्रतिपत्त्यादिशुभप्रयोजनेषु सप्तवारजप्तगन्धनिक्खेवे नित्थारग-पारगो होइ, पूयासक्काराारिहो अ ॥

ॐ ह्रीँ असिआउसा नमः। त्रिकालं १०८ जापः। प्रतिदिनं उपाध्याय-वाचनाचार्ययोर्लघुमन्त्रः ॥

# वर्द्धमानविद्यासंप्रदायः ॥

ॐ नमो अरिहंताणं । ॐ नमो सिद्धाणं । ॐ नमो आयरियाणं । नमो उवज्झायाणं । ॐ नमो लोए सव्वसाहूणं ।

ॐ नमो भगवओ महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महइ महाविज्जा । ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजये जयन्ते अपराजिए अणिहए ॐ ह्रीं ठ ठ स्वाहा ॥

इति श्रीवर्द्धमानविद्या सर्वकार्यकरी ॥

ॐ ह्रीं अर्हं ह्र ह्र ह्रौं नमो वर्द्धमानस्वामिने स्वाहा ॥ ॐ वीरे वीरे जयवीरे महावीरे सेणवीरे वद्धमाणवीरे जए विजए जयन्ते अपराजिए सव्वट्ठसिद्धे निव्वुए महाणसे महाबले स्वाहा । मन्त्र विद्या च उभयोर्जाप १२००० । तत सिद्धा भवति । चतुर्थोपवासेन सौभाग्य-मुद्रया जाप । वार १०८ दिनं प्रतिध्यानं कर्त्तव्यम् । बोटितमन्नं न भोक्तव्यम् । उच्छिष्टश्च रक्षणीया (य) । वासनिक्षेप सदा कार्य । सर्वकर्मकरो मन्त्र । क्षुल्लक क्षुल्लिकादीनो पस्थापना प्रतिष्ठादौ वासनिक्षेपादिक्रिया अनेन क्रियते ॥ १

[1]अर्हं ॐ ह्रीं ह्रूं ह्र ह्रौं नमो वर्द्धमानस्वामिने स्वाहा ॥ ॐ वीरे वीरे इत्यादि विद्या भणनीया । पुस्तकसमर्थनादिकं कार्यम् ॥ २

तथा, ह्रीं अर्हं ॐ ह्रूं ह्र ह्रौं नमो वर्द्धमानस्वामिने स्वाहा । ॐ वीरे वीरे इत्यादि विद्या भणनीया, यति निर्वृतिकार्यादिकं कार्यम् ॥ ३

तथा, ॐ ह्रीं अर्हं ह्रूं ह्र ह्रौं नमो वर्द्धमानस्वामिने स्वाहा । ॐ वीरे वीरे इत्यादि विद्या भणनीया, जनाकर्षणविषये ध्यातव्यम् ॥ ४

तथा, ह्रीं ॐ अर्हं ह्र ह्र ह्रौं नमो वर्द्धमानस्वामिने स्वाहा । ॐ वीरे इत्यादि विद्या भणनीया, सौभाग्यार्थं ध्यातव्या ॥ ५

ॐ ह्रीं श्रुं वीराय स्वाहा अक्षता अभिमन्त्रणीया ॥ ६

ॐ ह्रीं अर्हं जए स्वाहा, जयादिक क्रियते ॥ ७

ॐ ह्रीं विजए विजयं कुरु कुरु स्वाहा, विजयविद्या ॥ ८

ॐ ह्रीं अपराजितायै अपराजितत्वं कुरु कुरु स्वाहा, अपराजितानाम विद्या ॥ ९

ॐ ह्रीं ह्रूं जयन्ते स्वाहा, अनया जयादिकं कार्यम् ॥ १०

विद्याचतुष्टयं वीरकल्याणेषु साध्यते । जय स्वदेशे, विजय परदेशे, अपराजितत्व

---

१ ह्रीं ॐ अर्हं इत्यादि पुस्तकसमर्थनकार्ये १, ॐ अर्हं ह्रीं इत्यादि सौभाग्यार्थे २, ह्रीं अर्हं ॐ इत्यादि शान्तिकार्ये ३, अर्हं ॐ ह्रीं इत्यादि वश्यकर्मणि ४, इति पाठे दृश्यते ॥

ॐ वीरे वीरे महावीरे अपराजिते स्वाहा ॥

वर्द्धमानविद्या ॥छ॥

ॐ ऐं ह्रीँ नमो वर्द्धमानस्वामिने महाविद्ये मम शान्तिं कुरु कुरु तुष्टिं कुरु कुरु पुष्टिं कुरु कुरु हृष्टिं कुरु कुरु जीवरक्षां च कुरु कुरु ह्रूँ क्ष्वँ जंभे मोहे ह्रूँ फट् ठः। बलिं गृह्ण गृह्ण धूपं गृह्ण गृह्ण पुष्पाणि गृह्ण गृह्ण नैवेद्यं गृह्ण गृह्ण नानाविधं बलिं गृह्ण गृह्ण सर्वरोगं अपहर अपहर त्रां त्रीं त्रूं त्रः वर्द्धमानस्वामिने स्वाहा ॥

इति वर्द्धमानविद्या ॥

ॐ नमो भगवओ महइ महावीरस्स० जया अपराजिते स्वाहा ॥

उत्तरफाल्गुन्यां उपवासो जातिकुसुमैर्वर्द्धमानजिनस्याग्रतोऽर्चां कृत्वा सहस्र जपेत्। उत्तरकालं शुचिर्भूत्वा एकविंशतिवारान् मुखमभिमन्त्र्य यत्र व्रजेत् तत्र सर्वजनप्रियो भवति। कोष्ठागारे बीजमभिमन्त्र्यानयैव विद्यया निक्षिपेद् वर्द्धते। परमुपोषितः सन्मुखं कर्णं वाऽभिमन्त्र्य सर्वान् भोजयति वादे द्युते चापराजितो भवति। गौतमवाक्यम् ॥

ॐ नमो वद्धमाणसामिस्स सिंधुले भयवदे वीरे महावीरे सुवीरे अजिए अपराजिए स्वाहा ॥

वर्द्धमानपुरतः पूर्वफाल्गुन्यां उपवासं कृत्वा जातिपुष्पैः १००८ जापः। वार २१ कर्णमभिमन्त्र्य सुप्यते। रात्रौ जीवितमरणं कथयति।

ॐ नमो भगवओ अरहओ लहुभयवई महइ महाविज्जा वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जयंते अपराजिते स्वाहा ॥ मण्डलविधिः पटादवसेयः ॥

इति वर्धमानविद्याकल्पः समाप्त इति ॥

नित्यकृत्यविधिः—

पञ्चाङ्गशौचं कृत्वा ॐ भूरसीभूतधात्री सर्वभूतहिते भूमिशुद्धिं कुरु कुरु स्वाहा ॥

अनेन त्रिः स्पृष्ट्या भूमौ वासक्षेपेण भूमिशुद्धिं कुर्यात् ॥ १

ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः अङ्गुष्ठादिषु वामकरे न्यसेत् ॥ २

ॐ अमले विमले सर्वतीर्थजले पः पः पाँ पाँ वाँ वाँ अशुचिः शुचिर्भवामि स्वाहा ॥

अञ्जलौ सर्वतीर्थोदकं संकल्प्य ललाटादारभ्य पादतलं यावत् स्नायात् ॥ ३

ॐ झ्वीँ क्ष्वीँ पां वां स्वाहा वस्त्रशुद्धिः ॥ ४

ॐ विद्युत्स्फुलिङ्गे महाविद्ये सर्वकल्मषं दह दह स्वाहा। त्रिर्भुजामध्यस्पर्शेन कल्मषदहनं कुर्यात् ॥ ५

ॐ विमलाय विमलचित्ताय झ्वीँ क्ष्वीँ स्वाहा ॥ अनेन हृदयं स्पृशन् हृदयशुद्धिं कुर्यात् ॥ ६

नमो अरिहंताणं अङ्गुष्ठयोः, नमो सिद्धाणं तर्जन्योः, नमो आयरियाणं मध्यमयोः,

नमो सव्वज्झायाणं अनामिकयोः, नमो लोए सव्वसाहूणं कनिष्टयोः । ह्रौँ हृदये, ह्रीँ कण्ठे ह्रूँ तालुनि ह्रौँ भ्रूमध्ये ह्रः ब्रह्मरन्ध्रे दशमद्वारे वामकरेण न्यसेत् । ७

ततः ॐ ललाटे कु वामस्कन्धे रु वामकुक्षौ कु वामपादे ल्ले दक्षिणपादे स्वा दक्षिणकुक्षौ हा दक्षिणस्कन्धे ततो वैपरीत्येन हा स्वा ल्ले कु रु कु ॐ वामकरेण न्यसेत् । इयं तु स्वप्न-दुर्निचाकनि-विद्युच्छत्रुभयादिषु कुरुकुल्ला रक्षा ॥ ८

ततः क्षिप ॐ स्वाहा क्षि पीतवर्णं पादयोः, प श्वेतवर्णं नाभौ, ॐ रक्तवर्णं हृदि, स्वा नीलवर्णं मुखे, हा मृगमदवर्णं भाले, ततो वैपरीत्येन तेष्वा(ष्व)ङ्गेषु हा स्वा ॐ पक्षि इति पृथिव्यप्तेजो वाय्वाकाशमहाभूतैः सकलीकरणम् ॥ ९

ॐ ॐ नमः सामान्यार्थः वासैः संवृतपटपूजा, ततो मण्डलोद्घाटनं पटनिश्चलीकरण गर्भादारभ्य मण्डलपूजां कृत्वाआवाहनादिपञ्चकं मन्त्रमुद्राभिः कुर्यात् तद्यथा—ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिन् ! एह्येहि संवौषट् इत्यावाहना आवाहनीमुद्रया ॥ १

ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिन् तिष्ठ तिष्ठ ठ ठः स्थापनामुद्रया स्थापनं हृत्कमलादवतार्य पटे स्थाप्यते ॥ २

ॐ ह्रीँ नमोऽस्तु भगवन् वर्द्धमानस्वामिन् मम संनिहितो भव वषट् संनिधापन्या संनिधापनम् ॥ ३.

ॐ ह्रीँ नमोस्तु भगवन् ! वर्द्धमानस्वामिन् ! पूजान्तं यावदत्रैव स्थातव्यम्, संनिरोधिन्या संनिरोधः ॥ ४

ॐ ह्रीँ नमोऽस्तु भगवन् ! वर्द्धमानस्वामिन् ! परेषामदृश्यो भव, अवगुण्ठिन्या अवगुण्ठनम् ॥ ५

ॐ ह्रीँ नमोऽस्तु भगवन् ! वर्द्धमानस्वामिन् ! गन्धादीन् गृह्ण गृह्ण नमः । गन्धादिभि पूजा ॥ ६

अमृतमुद्रया सजीवतापादनं समवसरणस्थभगवद्रूपध्यानं ततश्छोटिका । विघ्नत्रासार्थं सौभाग्य[१]-परमेष्ठि[२]-प्रवचन[३]-सुरभि[४]-अञ्जलिलक्षणं[५] मुद्रापञ्चकं मूलमन्त्रजापपूर्वं दर्शयेत् । ततः जाप. १०८ मेरूल्लङ्घन-भ्रूकम्प-ओष्ठचालन-दन्तविवृतित्यागः जापान्ते अस्त्रमुद्रया आसनक्षोभणम् ॥

ॐ आज्ञाहीनं क्रियाहीनं मन्त्रहीनं च यत् कृतम् ।
तत् सर्वं कृपया देव! क्षमस्व परमेश्वर!॥१॥

इति श्लोकं पठित्वा ॐ ह्रीँ नमोऽस्तु भगवन् ! वर्द्धमानस्वामिन् ! पुनरागमनाय स्वस्थानं गच्छ गच्छ इति भणित्वा संहारमुद्रया विसर्जनं सुषुम्णया पूरकेण हृत्कमले पूरयेत् ॥

इति देवताऽवसरनित्यकृत्यं वाचक वाचनाचार्ययो. ॥